ओ३म्

गुरुकुल-ग्रन्थावलिः

# संशोधित पञ्चतन्त्रकम्

## द्वितीयो भागः

गुरुकुल-संस्कृत-पाठ्य-पुस्तक-मालायाम्

चतुर्थम्पुस्तकम्

गुरुकुलस्थ पण्डितैः संशोधितम् ।



प्रथमावृत्तिः १००० } सम्वत् १९७१ { मूल्यम् [illegible]

कांगड़ी गुरुकुल यन्त्रालये श्री चन्द्रलाल प्रबन्धेन मुद्रितम् तथा प्रकाशितम्

ओ३म्

# प्रस्तावना

पञ्चतन्त्रमिदं किल संस्कृतसाहित्यस्य समुज्ज्वलतमं भूषणम् । न केवलं भारते वर्षे, न केवलं देववाणिरसिकेषु, अपितु सर्वत्रापि भूमण्डले अस्य ग्रन्थस्य महती प्रतिष्ठा वरीवर्ति । शश्वापि जगतः प्रियोपदेशसाधनेषु ग्रन्थेषु प्रथममस्य स्थानम् । न चास्येयं कीर्ति र्नवीना; ख्रिष्टसंवत्सरारम्भादपि पूर्वमस्य भारतीयगजमण्डले समादरः श्रूयते । षष्ठ्यां ख्रिष्टशताब्द्यांखुस्रो अनुशेरवाँइत्याख्यस्यससेनियननृपतेराज्ञयाऽयं ग्रन्थः पहलवीभाषायामनूदितोऽभूत् । अष्टमशताब्द्यां च तस्यैव पुनरारव्यभाषाया मनुवादः संजात इत्युपलभ्यते । इत्येवञ्चिरकालात्संसारविदितमिदं पञ्चतन्त्रं अद्यापि तादृशमेवादरंलभते, यादृशं रचनाकाले लेभे ।

भाषाऽस्यरुचिरा मधुरा सरला च । न तत्र अप्रसिद्धपदानां समावेशो, नापि च समासबाहुल्यम् । बालैरपि प्रौढैरपि चास्याध्ययनं विधातुं शक्यम् । कथाः सर्वा अपि मनोहारिण्य उपदेशप्रदाश्चयद्यपि तेषु पात्राणि प्रायः पशुपक्षिकीटादिभ्य एव संगृहीतानि, तथापि तेन पुस्तकस्योपयोगितायाः परिवृद्धिरेवजाता न क्षयः । भाषाया माधुर्यं, विषयस्य चोपयोगित्वमस्य ग्रन्थस्य प्राचीनत्वे प्रबलम्प्रमाणमस्ति । मध्यकालनिर्मितेषु ग्र-

## द्वितीयः पाठः ।

अत्रान्तरे सुरनगरे रम्भोर्वश्योर्नर्तननैपुणे विवादः समजायत । तयोरन्तरमवगन्तुममरेषु कोऽपि न शशाक । एकदा सिंहासनासीनं देवं वासवं नारदो बभाण— 'देव, धरातले विक्रमो नाम राजा जागर्ति । स सकलकलाभिज्ञः, विशेषतः संगीतविद्याविचक्षणः । स एव एतयोर्विवादनिर्णयं कर्तुं प्रभवेत्' इति । तच्छ्रुत्वा महेन्द्रो विक्रममानेतुं मातलिं प्रेषयामास । विक्रमोऽपि मातलिसमानीतं रथमारुह्य, सहैव वेतालेन सुधर्मां प्रविश्य, वासवेन संमानितः समुचितमासनमध्यास्त । तदानीं रम्भोर्वश्योर्नृत्तं प्रावर्तत । राजा तूर्वशीं प्रशशंस । पाकशासनस्तु परं संतुष्य, मणिमयमतिमनोहरं सिंहासनमेकमस्मै प्रादात् । तस्मिन्सिंहासने द्वात्रिंशत्सालभञ्जिकाः सन्ति । तासां शिरसि पदं निधाय तदध्यासितव्यम् । राजा तु महेन्द्रमापृच्छ्य तदासनं गृहीत्वा निजं नगरमगमत् ॥

---

## तृतीयः पाठः ।

तदनन्तरमेकदा शुभे मुहूर्ते विक्रमार्को ब्राह्मणाशीर्वादपूर्वकं तत्सिंहासनमारुह्य राज्यमकरोत् । एवं महान्कालो गतः । तत एकदा प्रतिष्ठानगरे कस्यांचित्कन्यकायां शालिवाहनो नाम बालः समजायत । तदानीमुज्जयिन्यां परितो भूकम्पादीनि दुर्निमित्तानि दृष्टानि । ततो विक्रमादित्यो दैवज्ञानाहूय भूकम्पादिफलं पप्रच्छ । दैवज्ञा ऊचुः– 'भो देव, यदयं भूकम्पः

संध्याकाले जातः, ततो राज्ञोऽनिष्टं सूचयति ।' इति । तदाकर्ण्य राजा अब्रवीत्– "भो दैवज्ञाः, पुरा परमेश्वरः संतोषितो मामाह– 'भो राजन्, प्रसन्नोऽस्मि । विना अमरत्वं याचस्व' इति । ततोऽहमवोचम्– 'सार्धद्विहायन्यां कन्यायामुत्पन्नात्पुत्रान्मम मरणं भवतु' इति । तच्छ्रुत्वा देवः तथेत्यनुजग्राह" इति । तदाकर्ण्य 'तर्हि तादृशः पुत्रो भविष्यति' इति दैवज्ञैरप्युक्तम् ॥

---

## चतुर्थः पाठः ।

राजाऽपि 'हा दैवसृष्टिरचिन्त्या । तादृशः कस्मिन्देशे कथमुत्पन्नो भविष्यति' इति व्याकुलचित्तो वेतालमाहूय एतत्सर्वं तस्मै निवेद्याब्रवीत्— 'भो यक्ष, पृथिवीं परिभ्रम । एवंविधः पुत्रः कस्मिन्देशे कुत्र नगरे समुत्पन्न इति ज्ञात्वा झटिति समागच्छ' इति । वेतालोऽपि 'महान्प्रसादः' इति निर्गत्य, सागरवेलावलयितां सगिरिकाननां वसुंधरां पर्यटन्, प्रतिष्ठानगरं प्रविश्य, कुत्रापि कुम्भकारगृहे कांचिन्माणवकं कांचित्कन्यकां च क्रीडन्तौ दृष्ट्वाऽपृच्छत्– 'कौ युवाम्?' इति । कन्या 'अयं मम पुत्रः' इति प्रत्याह । वेतालः 'कस्ते पिता?' इति पुनरपृच्छत् । कन्या तु कंचन ब्राह्मणमदर्शयत् । ततो ब्राह्मणमप्राक्षीत् । ब्राह्मणः 'इयं मम कन्या, अस्याः पुत्रोऽयं बालः' इति प्रतिजगाद । तच्छ्रुत्वा परं विस्मयं गतो वेतालो ब्राह्मणं पुनरब्रवीत्– 'भो ब्राह्मण, कथमेतत्' इति । सोऽब्रवीत्—

'देवानां चरित्रं मानवानामगोचरः । अस्याः रूपलावण्यातिशयमोहितः शेषो नागेन्द्रोऽनया संगतः । तस्मादस्यां जातः पुत्रोऽयं शालिवाहननामा' इति । तदाकर्ण्य वेतालः सत्वरमुज्जयिनीमागत्य विक्रमादित्याय सर्वमपि वृत्तान्तमकथयत् ॥

---

## पञ्चमः पाठः ।

राजापि खड्गमादाय प्रतिष्ठानगरं प्रविश्य, यावत्खड्गं शालिवाहने चिक्षेप; तावत्तेन स्वयमेव हतः । ततो मन्त्रिषु 'राजायमपुत्रः । किंवा कर्तव्यम्' इति विचारयत्सु भट्टिः प्राह– 'विचार्यताम् । आसां राजमहिषीणां कापि गर्भिणी स्यात्' इति । ततो विचार्यमाणे, कापि सप्तमासगर्भा समदृश्यत । तदा सर्वे मन्त्रिणो मिलित्वा, गर्भस्याभिषेकं कृत्वा, स्वयं राज्यं पर्यपालयन् । तदिन्द्रदत्तं सिंहासनं यदैव शून्यमासीत्, तदा मध्येसभं काप्यशरीरिणी वागुदभूत्– 'भो मन्त्रिणः, अस्मिन्सिंहासने समुपवेष्टुं विक्रमार्कसदृशो राजा कोऽपि नास्ति। तस्मादिदं सुक्षेत्रे निक्षिप्यताम्' इति । तन्निशम्य मन्त्रिणः कुत्रापि पवित्रे क्षेत्रे तत्सिंहासनं भूम्यन्तर्निक्षिप्य, तत्क्षेत्रं यावनालचणकसमृद्धं कस्मैचिद्ब्राह्मणाय ददुः । ब्राह्मणोऽपि यत्र सिंहासनं निक्षिप्तम्, तदुच्चस्थानमिति पक्षिणामुत्थापनार्थं तदुपरि मञ्चं निक्षिप्य तत्रोपविश्य पक्षिणः समुत्थापयन्नवर्तत ॥

---

## षष्ठः पाठः ।

ततः कदाचिद्भोजराजः ससैन्यो मृगयार्थमटन्, राजकुमारैः समेतः, तत्क्षेत्रसमीपे यावदाजगाम, तावन्मञ्चोपरि स्थितो ब्राह्मणः प्राह– 'भो राजन्, एतत्क्षेत्रं फलितमस्ति। ससैन्येन समागत्य तत्रभवता यथेच्छं भुज्यताम्। अश्वेभ्यश्चणकाद्यो दीयन्ताम्। अद्य मम जीवितं सफलमासीत्, यतो भवान्ममातिथिर्जातः। ईदृशस्त्वतिथिः कदापि न संदृश्यते' इति। तच्छ्रुत्वा राजा ससैन्यः क्षेत्रमध्यं प्रविवेश। ततो ब्राह्मणः पक्ष्युत्थापनाय मञ्चादवरुह्य क्षेत्रमध्ये प्रविष्टं राजानं दृष्ट्वा भीतोऽभणत्– 'राजन्, किमेवमधर्मः क्रियते? । ब्राह्मणक्षेत्रमिदं विनाश्यते । यद्यन्यैरधर्मः क्रियेत, तदा राज्ञे निवेदनीयम्। त्वमेवान्यार्य्यं कर्तुं प्रवृत्तः। इदानीं को वा त्वां निवारयिष्यति? । भवान्सर्वशास्त्राभिज्ञः कथं ब्राह्मणद्रव्यं विनाशयति' इति। ततो यावद्राजा तत्क्षेत्राद्बहिः सपरिवारो निर्जगाम, तावत्पक्षिणः समुत्थाप्य पुनर्मञ्चारूढो ब्राह्मणः प्राह— 'भो राजन्, किमिति गच्छसि? । इदं क्षेत्रं साधु परिणतं दृश्यते। यावनालांश्चणकांश्च भक्षयन्तु तव परिवाराः। पश्य उर्वारुकफलानि सन्ति। यथेष्टं भुज्यन्ताम्' इति। पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत्क्षेत्रमध्यं प्रविवेश, तावन्मञ्चादवरुह्य पुनस्तथैव निषेधाक्षराण्यभणत् ॥

## सप्तमः पाठः ।

ततो राजा स्वमनसि विचारयति स्म– 'अहो ब्राह्मणो यदा मञ्चमारोहति, तदास्य चेतसि दातव्यमिति बुद्धिरुत्पद्यते । यदावतरति, तदा दीना बुद्धिरुत्पद्यते । अहं मञ्चमारुह्य पश्येयम्' इति यावन्मञ्चमारुरोह, तावद्भोजराजस्य चेतस्येवं बुद्धिरुदभूत्— 'ननु विश्वस्यार्तिः परिहर्तव्या । सर्वस्यापि लोकस्य दारिद्र्यं निवारणीयम् । दुष्टा दण्डनीयाः । शिष्टाः परिपालनीयाः । प्रजा धर्मेण रक्षणीयाः । किं बहुना । अस्मिन्समये यदि कोपि मम शरीरमपि प्रार्थयते, तर्हि तदपि दद्याम्' इति । ततो राजा परमानन्दपूर्णहृदयः पुनरपि विचारयति स्म– 'एतत्क्षेत्रस्य माहात्म्यमेवंविधां बुद्धिमुत्पादयति । कथमेतत् ज्ञायताम्' इति । ततो ब्राह्मणमाहूयापृच्छत्– 'भो ब्राह्मण, तवैतत्क्षेत्रे कियान् लाभो भवति ?' इति । ब्राह्मणः– 'भो राजन्, भवान्सकलाभिज्ञः । अविदितं भवतः किमपि नास्ति । तद्भवानेव समालोचयतु' इति प्रत्यवदत् । ततो राजा ब्राह्मणमनेकधनधान्यादिना संभाव्य क्षेत्रं वशीकृत्य मञ्चस्याधश्चखान । तत्र पुरुषमात्रे गर्ते शिलैका सुमनोहरादृश्यत । तच्छिलाधःप्रदेशे कापि चन्द्रकान्तशिला दृष्टा । ततो नानाविधरत्नखचितं द्वात्रिंशत्सालभञ्जिकासमलंकृतमतिरमणीयं सिंहासनमेकमदृश्यत । ततो भोजः परमानन्दपूर्णहृदयः सिंहासनं नगरं नेतुं यावदुच्चलयामास, तावदतिगरिष्ठमासनं नोच्चचाल ॥

# अष्टमः पाठः ।

ततो राजा 'कुतः सिंहासनं नोच्चलति?' इति मन्त्रिणमपृच्छत् । मन्त्री तु 'राजन्, दिव्यमेतदासनं बलिपूजादिकं विना नोच्चलेत्' इति प्रत्यवदत् । तच्छ्रुत्वा राजा ब्राह्मणानाकार्य सर्वमपि संविधानं कारितवान् । ततस्तत्सिंहासनं लघु भूत्वा स्वयमेवोच्चचाल । तदालोक्य राजा मन्त्रिणमुवाच— 'योऽनर्थं निवारयति, असाध्यमर्थं च साधयति, स एव मन्त्री' इति । ततो मन्त्री प्रत्यब्रवीत्– 'मन्त्रिणा स्वामिहितमेव कार्यं कर्तव्यम् । अन्यच्च, मन्त्रिणा विना राज्यम्, ज्ञानं विना वैराग्यम्, खलानां मैत्री, निर्धनस्याटोपः, सेवकस्य कोपः, इत्येतत्सर्वं निष्फलम् । अपरं च, राज्ञा महतामर्चनं कार्यम् । आप्तानां बुद्धिर्ग्राह्या । देवब्राह्मणाः परिपालनीयाः । न्यायमार्गे वर्तितव्यम् । अपि च, राजन्, ये राजगुणाः, ते सर्वे त्वयि विद्यन्ते । अतस्त्वं सकलराजराजोत्तमः । मन्त्रिणाप्येवं गुणगरिष्ठेन भवितव्यम् । स्वामिकार्यार्थमुद्यमः, पापाद्भयम्, प्रजानां हितम्, परिवाराणां संयोजनम्, राज्ञश्चित्तवृत्त्यनुसरणम्, अपायकार्याद्राजनिवारणम्, इत्यादयो ये मन्त्रिगुणाः, तैर्युक्तः कुलक्रमागतः कामन्दकचाणक्यधौम्यशुक्रवाचस्पत्यादिनीतिशास्त्राभिज्ञो मन्त्रिपदयोग्यो भवति । पुरा किल नन्दभूपालो मन्त्रिणा बहुश्रुतेन ब्रह्महत्याया निवारितः' इति ॥

## नवमः पाठः ।

भोजः— कथमेतत्? इति पप्रच्छ । सोऽब्रवीत्—

"विशालायां नन्दो नाम राजा महाशौर्यसंपन्नोऽभूत् । स निजबलेन प्रत्यर्थिनृपालान्स्वपादपद्मोपजीविनो विधाय, एकच्छत्रेण राज्यमकरोत् । तस्य च बहुश्रुतो नाम मन्त्री । भानुमती नाम महिषी । जयपालो नाम तनयः । तस्य राज्ञो महिष्यां भानुमत्यामतीव प्रीतिरासीत् । सिंहासनेऽपि सहैव तया समुपविशेत् । निमेषमपि तया विना न तिष्ठेत् । एकदा मन्त्री स्वमनस्यचिन्तयत्— 'अयं राजा निर्लज्जो मध्येसभं सिंहासने स्त्रियमुपवेशयति । तदा सर्वे जनास्तां पश्यन्ति । अनुचितमयं न जानाति । किं क्रियताम्' इति । तत एकदावसरं प्राप्य राजानमब्रवीत्— 'देव, विज्ञाप्यमस्ति' इति । राजा 'किं तत्? कथ्यताम्' इत्याह । मन्त्री 'यदेषा भानुमती सिंहासने सहोपविशति, तदतीवानुचितम् । 'असूर्यपश्या राजदाराः' इति हि संप्रदायः । अत्र नानाजनाः समागत्य तां पश्यन्ति । अत इतः परं नैवं युक्तं कर्तुम्' इति विज्ञापयामास । ततो राजा 'भानुमत्यनालोकनं क्षणमपि न सहे । तदुपायं निरूपय' इत्याह । मन्त्री 'आलेख्यगतां तां पश्यतु देवः' इत्युपायमुपादिशत् ॥

---

## दशमः पाठः ।

अनन्तरं राजा तद्वचनं समुचितं मत्वा चित्रकारमाहूय, 'भानुमतीरूपं चित्रे निवेशय' इत्यादिदेश । स तु तस्या रूपं

साक्षादालोक्य पद्मिनीलक्षणयुक्तां तां चित्रे विलिलेख । राजापि चित्रलिखितां प्रियां दृष्ट्वा प्रहृष्टस्तस्मै पारितोषिकं ददौ । अनन्तरमेकदा राजगुरुः शारदानन्दश्चित्रपटे निवेशितां भानुमतीं दृष्ट्वा चित्रकारमभाणीत्— 'भानुमत्याः सर्वमपि रूपमत्र लिखितम् । परं त्वेकं विस्मृतं त्वया' इति । चित्रकारः 'भोः स्वामिन्, तत्किम्? कथय' इति सविनयमपृच्छत् । ततः शारदानन्दः 'तस्या वामसक्थिस्थले तिलसदृशं लक्ष्मास्ति । तन्न लिखितम्' इत्याह । राजा तु गुरोर्वचनं श्रुत्वा तद्वचनं तथ्यं ज्ञात्वा स्वमनस्यचिन्तयत्- 'कथमनेनास्या लक्ष्म ज्ञातम्? । नूनमनया सहास्य स्नेहो विद्यते' इति । एवं विचार्य मन्त्रिणमाहूय सर्वमकथयत् । मन्त्रिणापि तस्मिन्समये तच्चित्तानुगुणं भणितम् ।। अनन्तरं राजा 'मन्त्रिन्, यदि मम प्रियोऽसि, तर्ह्यमुं शारदानन्दं मारय' इत्यादिक्षत् ॥

---

## एकादशः पाठः ।

सचिवोऽपि तथेति प्रतिज्ञाय, जनानां पुरतः शारदानन्दं दृढं बद्ध्वा वध्यस्थानमनयत् । तदा गुरुः श्लोकमेकमपठत्—

**वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।**
**सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥२॥**

तच्छ्रुत्वा मन्त्री स्वमनस्यचिन्तयत्—'अहो, एतत्सत्यं वा मिथ्या वा? । किमर्थं ब्राह्मणवधः क्रियते । अतीवायुक्तमिदम्' इति ।

अनन्तरं शारदानन्दं गूढं स्वभवनं नीत्वा भूगृहे निक्षिप्य, राजसंनिधिमागत्य, 'देव, अनुष्ठितो भवदादेशः' इत्यवादीत् । राजापि 'साधु कृतम्' इति प्रशशंस । तत एकदा जयपालो नाम राजकुमारः, आखेटार्थं वनाय निर्जगाम । तदा अकालवृष्ट्यादीनि दुर्निमित्तानि बभूवुः । तस्मिन्समये मन्त्रिपुत्रो बुद्धिसागरो दुर्निमित्तानि निरूप्य शतशो निवारयामास । एवं बहुधा निवारयन्तं बुद्धिसागरमनादृत्य जयपालः खड्गव्याघ्रशरभमृगसमाकुलं महदरण्यं प्रविश्य यावत्पश्चाद्ददर्श, तावत्सर्वोऽपि सैन्यवर्गो नगरमार्गे लग्नो दृष्टः । स्वयमेकाकी संवृत्तस्तुरगमात्रसहायः, पुरः सरोवरमेकमद्राक्षीत् । तत्राश्वादवतीर्य वृक्षशाखायामश्वं निबध्य जलमवगाह्य श्रान्तपिपासस्तरुच्छायायां विशश्राम ॥

---

## द्वादशः पाठः ।

तदानीमतिभयंकरः कश्चिद्व्याघ्रः समापतत् । तं दृष्ट्वाश्वश्छिन्नबन्धो यथागतमधावत् । राजकुमारोऽपि भयाद्वेपमानाङ्गः शाखामालम्ब्य द्रुममारुरोह । तत्र च पूर्वारूढं भल्लूकं दृष्ट्वा अत्यन्तभीतं राजकुमारं भल्लूकः ससान्त्वमब्रवीत्— 'भो राजकुमार, मा भैषीः । अद्य मां शरणं गतस्त्वम् । अतस्तवाहं किमनिष्टं करिष्यामि? । मयि विश्वस्य, व्याघ्रादपि त्वया न भेतव्यम्' इति । ततो राजकुमारः सभयमिदमभाणीत्— 'भो ऋक्षराज, अहं त्वां शरणं गतः । विशेषतो भीतश्च । महत्पुण्यं शरणागतरक्षणेन ते भवेत् । उक्तं च—

एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥३॥

इति ।' ततो भल्लूकेन विश्वासितो राजपुत्रः । अत्रान्तरे व्याघ्रोऽपि वृक्षमूलमाजगाम । सूर्यश्चास्तमगात् । ततो मृगयापरिश्रान्तो राजकुमारो निद्रापरवशो भल्लूकेनाङ्कमारोपितः सुखं सुष्वाप । तदवलोक्य व्याघ्रो भल्लूकमवादीत्– 'भो ऋक्ष, अयं मनुष्यो नगरनिवासी, अस्मानेव हन्तुं वनमागतः । अतः शत्रुभूतमेनं कथमङ्के न्यवेशयः ? । अयं त्वयोपकृतोऽप्यपकारमेव ते करिष्यति । तस्मादमुमधः पातय' इति । तच्छ्रुत्वा भल्लूकः प्राह– 'अयं यादृशः कीदृशो वा भवतु । परं मां शरणं गतः । अतोऽमुं न पातयेयम् ।' इति ॥

---

## त्रयोदशः पाठः ।

अत्रान्तरे सुप्तोत्थितं राजकुमारं भल्लूकः प्राह - 'भो, राजकुमार, अहं निद्रां गमिष्यामि । त्वमत्राप्रमत्तास्तिष्ठ' इति । राजकुमारः 'तथा भवतु' इत्याह । ततो भल्लूको राजपुत्रसमीपे निद्रामवाप । तदा व्याघ्रः प्राह– 'राजकुमार, त्वमस्मिन्विश्वासं मा कुरु । यतोऽयं भल्लूकश्चञ्चलचित्तो दृश्यते, ततोऽस्य प्रसादोऽपि भयंकरः । तथा चोच्यते–

क्षणे तुष्टाः क्षणे रुष्टा वितुष्टाश्च क्षणान्तरे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः ॥४॥

इति । किं च त्वां मत्तो रक्षित्वा स्वयं हन्तुमिच्छति । अतस्त्वमेनमधः पातय । अहमेनं भक्षयित्वा गमिष्यामि । त्वमपि निजनगरं गन्तुमर्हसि' इति । तदाकर्ण्य राजपुत्रो जयपालो यावदेनमधः पातयितुमारेभे, तावद्भल्लूको वृक्षात्पतन्नपि शाखान्तरमाललम्बे । तं दृष्ट्वा राजपुत्रो विफलप्रयत्नो बिभाय । तदा भल्लूकः 'भोः पापिष्ठ, किमर्थं बिभेषि? यत्पुरार्जितं कर्म, तत्फलं त्वया भोक्तव्यम् । अतस्त्वं 'ससेमिरा' इति वदन्पिशाचो भूत्वा प्रतिवनं परिभ्रम' इति शशाप । ततः प्रभातमासीत् । व्याघ्रस्तु निरगात् । भल्लूकोऽपि यथेच्छं जगाम । राजकुमारोऽपि 'ससेमिरा' इति वदन्पिशाचो भूत्वा वनेषु परिबभ्राम । ततोऽस्य तुरंगमो नगरमगमत् । तत्र राजपुत्ररहितमश्वं दृष्ट्वा जना राज्ञे समाचख्युः ॥

## चतुर्दशः पाठः ।

ततो राजा मन्त्रिणः समाहूय भणति स्म– 'भो मन्त्रिणः, मृगयार्थं कुमारे निर्गच्छति, महद्दुर्निमित्तमासीत्किल । तथापि मत्तस्तदुल्लङ्घ्य वनं गतः । तस्य फलं सद्य एव समुपनतम् । तदारूढोऽश्वः शून्यः समागतः । ततस्तन्मार्गणाय वनं प्रति गमिष्यामि' इति । ततस्तेऽप्यङ्गीचक्रुः । ततो राजा मन्त्रिभिः परिवारेण च सह, कुमारो येन मार्गेण गतः, तेनैव मार्गेण वनं प्राविशत् । ततो वनमध्ये परिभ्रमन्तम् 'ससेमिरा' इति वदन्तं पिशाचभूतं सुतं दृष्ट्वा राजा महाशोकसागरनिमग्नः,

समादाय स्वनगरमागमत् । आगत्य च तदुन्मादशमनाय बहून्विधीन्कारयामास । केनापि कुमारः स्वस्थो न बभूव । तस्मिन्समये राजा मन्त्रिणं बहुश्रुतमभाणीत्– 'अस्मिन्समये शारदानन्दस्तिष्ठेद्यदि, क्षणमात्रेण चिकित्सां कुर्यात् । स मया वृथैव मारितः । पुरुषेण यत्कार्यं क्रियते, तद्विचार्यैव कर्तव्यम् । भवतु । तत्कर्मायत्तमभूत् । किमनेन गतचिन्तनेन । इदानीं महान्प्रयत्नः कर्तव्यः' इति । मन्त्री 'कथं कर्तव्यः ?' इत्यपृच्छत् । राजाब्रवीत्– 'यः कोऽपि कुमारस्य यदि चिकित्सां करिष्यति, तस्मै अर्धराज्यं दास्यामि । सर्वानन्यांश्चाभीष्टान्दास्यामीत्यभितो नगरमुद्घोषय' इति । ततो मन्त्री तथैव विधाय, स्वभवनमागत्य शारदानन्दाय सर्वं निवेदयामास । तत्सर्वं श्रुत्वा शारदानन्दः "बहुश्रुत, 'मम गृहे कापि कन्या वर्तते । यद्येनं पश्येत्, कमप्युपायं कुर्यात्' इति राज्ञे निवेदय" इत्यवादीत् । तच्छ्रुत्वा मन्त्री राज्ञे तन्निवेदयामास ॥

---

## पञ्चदशः पाठः ।

ततो राजा सपुत्रः सपरिवारो मन्त्रिगृहमागत्योपविवेश । राजपुत्रोऽपि 'ससेमिरा' इति वदन्नुपविष्टः । तदाकर्ण्य यवनिकान्तर्वर्ती शारदानन्दः 'भो राजपुत्र,' इत्यामन्त्रयत । तदा भूयोऽपि 'ससेमिरा' इति वदन्तं राजतनयमुद्दिश्यैवं पद्यं पपाठ–

सद्भावं प्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तानां हन्तने किं नु पौरुषम् ॥५॥

तत्पद्यं श्रुत्वा राजपुत्रश्चतुर्णां वर्णानामादिमं वर्णं परित्यज्य 'सेमिरा' इत्यवदत् । पुनश्च शारदानन्दो द्वितीयं पद्यमपठत्—

सेतुं दृष्ट्वा समुद्रस्य गङ्गासागरसंगमम् ।
ब्रह्महत्या प्रमुच्येत मित्रद्रोहो न मुच्यते ॥६॥

इति । तत्पद्यं श्रुत्वा राजपुत्रो वर्णद्वयं परित्यज्य 'मिरा' इत्युक्तवान् । ततः शारदानन्दस्तृतीयं पद्यमपठत्—

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥७॥

इति । ततो वर्णत्रयं परित्यज्य 'रा' इत्यब्रवीत् । तच्छ्रुत्वा शारदानन्दश्चतुर्थं पद्यमपाठीत्—

राजन् भोस्तव पुत्रस्य यदि कल्याणमिच्छसि ।
दानं देहि द्विजातिभ्यो वर्णानां ब्राह्मणो गुरुः ॥८॥

---

## षोडशः पाठः ।

ततो राजपुत्रः स्वस्थमनाः सावधानश्च पितुर्भल्लूकवृत्तान्तं सर्वमकथयत् । तत्समाकर्ण्य राजा शारदानन्दमपृच्छत्—

ग्रामे वससि कल्याणि विपिनं नैव गच्छसि ।
ऋक्षव्याघ्रमनुष्याणां कथं जानासि भाषितम् ॥९॥

इति । तच्छ्रुत्वा शारदानन्दः प्रत्यवादीत्—

देवाद्विजप्रसादेन वाणी जिह्वां ममाश्रिता ।
तेनाहमभिजानामि भानुमत्या यथाङ्कितम् ॥१०॥

तच्छ्रुत्वा राजा महाश्चर्यभारितमना यावत् यवनिकामाचकर्ष, तावच्छारदानन्दः साक्षाददृश्यत । ततः सपुत्रो राजा तं प्रणनाम । तदा मन्त्रिणा राज्ञे पूर्ववृत्तान्तः कथितः । अनन्तरं राजा मन्त्रिणं प्रत्युवाच— 'तव संसर्गेणाहमकीर्तेर्निवृत्तोऽस्मि। अतस्त्वादृशेन सत्पुरुषेण सङ्गो विधेयः । तथा च वदन्ति—

वारयति वर्तमानामापदमागामिनीं च सत्सङ्गः ।
तृष्णां च हरति पीतं गङ्गाया दुर्गतिंच सद्योऽम्भः ॥

इति । एवं बहुधा मन्त्रिणं स्तुत्वा वस्त्रादिना संभाव्य राजा राज्यमकरोत् । ''

इति मन्त्री भोजराजं प्रति कथां कथयित्वा पुनरब्रवीत्— 'यो राजा मन्त्रिवाक्यं शृणोति, स दीर्घायुः सुखी च भवति' इति।

---

॥ पूर्वपीठिका समाप्ता ॥

---

## सप्तदशः पाठः ।

ततो भोजराजो मन्त्रिणं संभाव्य, तत्सिंहासनं पुरं नीत्वा, तत्र सहस्रमणिस्तम्भं मण्डपं कारयित्वा तस्मिन् सुमुहूर्ते सिंहासनं प्रतिष्ठाप्य, दिव्यौषधियुक्तैः पुण्यतीर्थोदकैर्मन्त्रपूर्वकं द्विजैरभिषेचितः, पुरन्ध्रीभिर्नीराजितः, कविभिर्निर्मलैराशीर्भिर-

भिनन्दितः, वन्दिभिः प्रशंसितः, चातुर्वर्ण्यं दानमानाभ्यां संमान्य, दीनान्धबधिरकुब्जादिभ्यो बहूनि धनानि दत्त्वा छत्रचामराङ्कितो यावत्सिंहासनसालभञ्जिकामस्तके पदपद्मं निधायारोढुमाजगाम, तावत्सालभञ्जिका मनुष्यवाचा राजानमब्रवीत्— 'भो महीपाल, तव विक्रमस्येव शौर्यौदार्यसाहसादयो यदि विद्यन्ते, तदास्मिन्सिंहासने समुपवेष्टुमर्हसि' इति । राजा तु 'ममाप्यौदार्यादिकमन्यूनमस्ति' इति प्रत्यवदत् । तच्छ्रुत्वा सालभञ्जिका भणति स्म— 'राजन्, एतदेव तवानुचितम्, यदात्मनात्मानं प्रशंससि । यः स्वगुणान्परदोषान्वा कीर्तयति, स केवलं दुर्जनः । सज्जनस्तु न तथा वक्ति । उक्तं हि--

स्वगुणानिव परदोषान्वक्तुं शक्नोति दुर्जनो लोके ।
स्वगुणान्परदोषान्वा कदापि नहि वक्ति सज्जनः सत्यम् ।

इत्थं सालभञ्जिकयोक्तं निशम्य विस्मितो भोजराजस्तामवदत्— 'सत्यमुक्तं त्वया । यः स्वगुणान्कीर्तयति, स मूर्खः । मया यत्स्वगुणाः कीर्तिताः, तदनुचितमेव । तिष्ठत्वेतत् । यस्यैतत्सिंहासनं तस्यौदार्यादिकं कथय । श्रोतुं वाञ्छति मे श्रोत्रम्' । सालभञ्जिकाभणत्— 'भो राजन्, एतत्सिंहासनं देवस्य विक्रमार्कस्य । स संतुष्टः कोटिशोऽर्थिने प्रयच्छेत् । किमेवंविधमौदार्यं त्वयि विद्यते ?' इति । इदं च वचनं श्रुत्वा भोजराजस्तूष्णीं प्रत्यावर्तत ॥

॥ प्रथममुपाख्यानम् ॥

## अष्टादशः पाठः ।

भूयोऽप्येकदा भोजराजः शुभे मुहूर्ते यावद्विक्रमार्कसिंहासनमारोढुमाजगाम, तावद्द्वितीयसोपानस्था सालभञ्जिकाभणत्– 'भोजराज, विक्रमार्कस्यौदार्यादिकं यदि त्वयि विद्यते, तदास्मिन् सिंहासने समुपविश' इति । राजा प्राह– 'सालभञ्जिके, कथय तस्यौदार्यादिकम्' इति । ततः सा तद्वृत्तान्तं वक्तुमारेभे–

"विक्रमादित्यो राज्यं कुर्वन्नेकदा चारानाहूयाब्रवीत्– 'सर्वतः पृथिवीं परिभ्रमत । यत्र यत्र कौतुकप्रदं तीर्थं देवायतनमन्यानि वा तथाविधानि विलोकयथ, तन्मम निवेदयत' इति । चारास्तु 'यदाज्ञापयति देवः' इति निष्क्रान्ताः । अथैकदा देशान्तरं परिभ्रम्यागतः कश्चिद्दूतो राजानं प्रणम्य व्यजिज्ञपत्– 'देव, चित्रकूटपर्वतनिकटे मनोहरः कश्चिद्देवालयोऽस्ति । तत्र च पर्वतेऽत्युग्राच्छिखराद्विमला कापि जलधारा पतति । तत्र स्नानमात्रेण महापातकादीन्यपि नश्यन्ति । किंच, यस्तु पापीयांस्तत्र स्नानमाचरति, तस्याङ्गादतीव कलुषमुदकं निःसरति । तेन स पूतो भवति । अन्यच्च, तत्र कश्चिद्ब्राह्मणो महति होमकुण्डे प्रतिदिनं जुहोति । न जाने– तस्य कति वत्सरा गता इति । प्रतिदिनं कुण्डाद्बहिः प्रेरितं भस्म पर्वताकारं दृश्यते । स केनापि न भाषते । एवमतिचित्रं स्थानमद्राक्षीदयं जनः' इति ॥

---

# एकोनविंशः पाठः ।

तच्छ्रुत्वा राजा स्वयमेकाकी तेन सह तं गिरिं गत्वा परमानन्दं प्राप्य ‘अहो पवित्रमिदं स्थानम् । पश्यत एव मे मनो विमलं भवति’ इति ब्रुवंस्तत्र निर्झरे स्नात्वा देवतां प्रणम्य, यत्र ब्राह्मणो होमं करोति, तत्र गत्वा तमपृच्छत् । ब्राह्मणः ‘जुह्वतो मे वर्षशतमभूत् । तथापि देवता प्रसादं नाकरोत्’ इति प्राह । तच्छ्रुत्वा राजा स्वयं देवतां स्मृत्वा जुहाव । तथापि देवता प्रसादं न विदधे । अनन्तरमिष्टसाहसो राजा स्वशीर्षमुत्कृत्य जुहोमीति पर्यालोच्य यावत्कण्ठे खड्गं निचिक्षेप, तावद्देवता कृपाणं गृहीत्वाब्रवीत्— ‘भोः साहसिन्, प्रसन्नास्मि । वरं वृणीष्व’ इति । राजापृच्छत्– ‘अयं ब्राह्मणश्चिरादतिनियमेन जुहोति । कुतोऽस्य ममेव प्रसादं न कृतवती ?’ इति । ततो देवता प्राह— ‘भो राजन्, अयं चिरादनुतिष्ठत्येव । परमस्य चेतः स्वस्थं न बभूव । चञ्चलचित्तस्य तपः फलाय न कल्पते । ततो राजा प्राह— ‘यदि मम प्रसन्ना भगवती, तर्ह्यस्य ब्राह्मणस्य मनोरथं पूरय’ इति । देवी जगाद— ‘भो विक्रम, महाद्रुम इव स्वदेहश्रममविगणय्य परेषां श्रमं परिहरसि । उक्तं च—

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे ।
फलन्ति च परार्थेषु नात्महेतोर्महाद्रुमाः ॥१३॥

इति ।’ एवं राजानं स्तुत्वा ब्राह्मणस्य मनोरथमापूर्यान्तरधात् ।

ततो राजा स्वनगरमगमत्" ।

इतीमां कथां कथयित्वा सालभञ्जिका भोजमब्रवीत्– 'त्वमेतदासनमारोढुमभिलषसि । विक्रमार्कगुणास्तु त्वयि न दृश्यन्ते' इति । तदाकर्ण्य राजा तूष्णीं बभूव ॥

---

॥ द्वितीयमुपाख्यानम् ॥

---

## विंशः पाठः ।

पुनरपि भोजे कदाचित्सिंहासनमारोढुमागते तृतीया सालभञ्जिकावदत्- 'भो राजन्, एतत्सिंहासनं तेनाध्यासितव्यम्, यस्मिन्विक्रमस्यौदार्यं विद्यते' इति । भोजः प्राह– 'सालभञ्जिके, तस्यौदार्यवृत्तान्तं ब्रूहि' इति । सालभञ्जिकावदत्– 'राजन्, साहसेन दीनरक्षणेन धैर्येणातिथिमनोरथपूरणेन च न कोऽपि भूमण्डले विक्रममतिशेते । एवं सकलगुणाधिवासो विक्रमः सकलमपि महीमण्डलं पालयन्नेकदा स्वमनस्यचिन्तयत्– 'अनित्योऽयं संसारः । कदा कस्य किं भविष्यतीति न ज्ञायते । अतः समुपार्जितं द्रव्यं दानभोगाभ्यां सफलं कर्तव्यम् । उक्तं च–

**दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः ।**
**पश्येह मधुकराणां संचितमर्थं हरन्ति लोकेऽन्ये ॥१४॥**

इत्येवं विचार्य सर्वस्वदक्षिणं कमपि यज्ञं कर्तुमुपाक्रमत । ततः शिल्पिभिरतिमनोहरं यज्ञायतनं कारयामास । ब्राह्मणाः, सर्वे राजानः, बान्धवाश्च समाजग्मुः । तत्रान्तरे राजा समुद्राह्वानाय कंचन ब्राह्मणं प्रेषयामास । सोऽपि समुद्रतीरं गत्वा 'भगवन् रत्नाकर, विक्रमार्को यज्ञं करिष्यति । तेन प्रेषितोऽहं त्वदाह्वानार्थं समागतोऽस्मि' इति ब्रुवन्, जलमध्ये पुष्पाञ्जलिं निक्षिप्य क्षणं तस्थौ । तदा कश्चिन्महातेजाः समागत्यावदत्– 'त्वं किल विक्रमेणास्मानाह्वातुं प्रेषितः । तेन कृता संभावना अस्मान्प्रत्येव । किं तु मम नायमवसरः समागन्तुम् । अमूल्यानि रत्नानि चत्वारि उपहरिष्यामि । प्रयच्छ तस्मै । तेषां माहात्म्यं शृणु– एषां प्रथमं रत्नं, यद्धनादि वस्तु स्मर्यते, तद्ददाति । द्वितीयं भक्ष्यभोज्यादिकममृतकल्पमुत्पादयति । तृतीयं हस्त्यश्वरथपदातियुक्तं बलं जनयति । चतुर्थं दिव्यं वस्त्राभरणादिकं प्रसूते'। एवमभिधाय रत्नानि दत्त्वा समुद्रोऽन्तरधात् । तदनन्तरं ब्राह्मणस्तानि गृहीत्वा चिरादुज्जयिनीमगमत् ॥

---

## एकत्रिंशः पाठः ।

अत्रान्तरे यज्ञं समाप्य राजा अवभृथस्नानं विधाय सर्वान्लोकान्परिपूर्णमनोरथानकरोत् । ब्राह्मणोऽपि राजानमवलोक्य मणीनां गुणानकथयत् । राजा 'ब्राह्मण, यज्ञदक्षिणाकालमतिलङ्घ्य समागतोऽसि । सर्वस्वमर्थिसात्कृतम् । अतस्त्वमेतेषां रत्नानां यदेकं तुभ्यं रोचते, तद्गृहाण' इत्यवादीत् । ब्रा-

ह्मणः 'महाराज, अहं गृहिणीं पुत्रं स्नुषां च पृष्ट्वा सर्वेभ्यो य-द्रोचते तद्गृह्णामि' इत्यवदत् । राजा 'तथा कुरु' इत्याह । ब्रा-ह्मणोऽपि स्वभवनमागत्य तद्वृत्तान्तं तेषामकथयत् । तन्निशम्य पुत्रोऽभ्यभाषत– 'यद्रत्नं चतुरङ्गं बलं ददाति, तद्ग्रहीष्यामः । तेन हि राज्यमायाति' इति । पिता जगाद– 'प्राज्ञो राज्यं नापेक्षेत । राज्यापेक्षयैव हि युधिष्ठिरादयो महद्दुःखमन्वभूवन् । अतो यस्माद्धनादिकं लभ्यते, तद्गृह्णीमः । तेन तु सर्वमपि लभ्यते । उक्तं च—

न तदस्ति जगत्यस्मिन्यदर्थेन न सिध्यति ।
अतोऽस्मिन्भुवने धीमान्धनमेकं प्रसाधयेत् ।१५।

ततो भार्याब्रवीत्— 'यद्रत्नं षड्रसोपेतं चतुर्विधमन्नं प्र-सूते, तद्ग्रहीतव्यम् । यतः सर्वेषां प्राणिनामन्नमेव जीवधारणम्' । स्नुषा तु 'यद्रत्नं वस्त्राभरणादिकं प्रसूते, तद्ग्राह्यम्' इत्याह । एवं परस्परं चतुर्णां विवादः समजायत । ततो ब्राह्मणो राज्ञः समीपमागत्य विवादं न्यवेदयत् । राजापि तच्छ्रुत्वा तस्मै ब्रा-ह्मणाय चत्वार्यपि रत्नानि ददौ । "

इति कथां कथयित्वा सालभञ्जिका भोजमब्रवीत्– 'त्वय्येवंविधमौदार्यं विद्यते चेत्, अस्मिन्सिंहासने समुप-विश' इति । तच्छ्रुत्वा राजा तूष्णीं बभूव ॥

॥ तृतीयमुपाख्यानम् ॥

---

## द्वाविंशः पाठः ।

भूयोऽप्येकदा सिंहासनमारोढुमागच्छति भोजे, तुरीया सालभञ्जिका भणति स्म— 'यदि त्वमौदार्येण विक्रमार्कमनुसरेः, तर्हीदं सिंहासनमारोह' इति । राजा 'ब्रूहि मे तस्यौदार्यवृत्तान्तम्' इत्यपृच्छत् । ततः सालभञ्जिका कथयितुमारेभे—

"विक्रमादित्ये राज्यं बिभ्रति सति, उज्जयिन्यां कोऽपि ब्राह्मणः सकलविद्याविचक्षणः सकलगुणालंकृतश्च परं पुत्रहीनः समभवत् । तमेकदा तत्प्रेयसी जगाद— 'भोः प्राणनाथ, पुत्रं विना गृहस्थस्य गतिर्नास्तीति श्रुतिस्मृतिपुराणविदः समामनन्ति ।

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा भवेत्पश्चात्तु तापसः ॥१६॥

इति ।' तदाकर्ण्य भूसुरः— 'प्रिये, सत्यमवादीः । किं तु परमेश्वरप्रसादं विना संततिर्न लभ्यते । अतो भवानीवल्लभमाराधयामः' इत्युक्त्वा परमेश्वराराधनाय तपः कर्तुमारभत । अथैकदा रात्रौ स्वप्ने वृषभारूढः परमेश्वरः प्रत्यक्षीभूयावदत्— 'वत्स, प्रदोषव्रतमाचर । तेन तव पुत्रो भविष्यति' इति । ब्राह्मणस्तु प्रबुध्य ससंभ्रममुत्थाय स्वप्नवृत्तान्तं वृद्धेभ्यो निवेदयामास । ते च 'यथार्थोऽयं स्वप्नः । अस्मिन्व्रतेऽनुष्ठिते सर्वथा तव पुत्रो भविष्यति' इति जगदुः । ततो ब्राह्मणस्तेषां वचनं मनसिकृत्य, मार्गशीर्षशुक्लत्रयोदश्यां मन्दवासरे कल्यो-

क्तप्रकारेण प्रदोषव्रतमन्वतिष्ठत् । परमेश्वरश्च प्रसन्नो भूत्वा पुत्रमस्मै प्रायच्छत् ॥

---

## त्रयोविंशः पाठः ।

तदनन्तरं ब्राह्मणस्तस्य जातकर्म विधाय द्वादशे दिवसे देवदत्त इति नाम चकार । अवशिष्टान्यन्नप्राशनचौलोपनयनादीनि कर्माण्यपि यथाकालमन्वतिष्ठत् । वेदान्साङ्गानध्यापयामास । ततः षोडशे वर्षे गोदानादिकं विधाय, सुरूपां बुद्धिशीललक्षणसंपन्नां कामपि कन्यकां विवाह्य, स्वयं तीर्थयात्रां कर्तुकामः पुत्राय बुद्धिमेवमुपदिदेश— 'वत्स, अतिकष्टां दशां प्राप्तोऽपि स्वधर्माचारौ न परित्यज । परैः सह विवादं मा कार्षीः । सर्वभूतेषु दयां कुरु । परमेश्वरं भक्तिं विधेहि । परस्त्रियो मा विलोकय । बलवद्भिर्विरोधं मा कुरु। सज्जनानाश्रय। दुर्जनान्परिहर । स्त्रीभ्यो गुह्यं मा वद' इति । एवमन्याश्च नीतीरुपदिश्य स्वयं वाराणसीं जगाम। ततो देवदत्तः पितुरुपदेशं पालयंस्तत्रैव नगरे सुखमुवास । अथैकदा समिधः समाहर्तुं महदरण्यं प्रविश्य यावत्समिधाश्चिच्छिद, तावद्विक्रमो मृगयार्थं विपिनमवगाह्य महान्तमेकं सूकरमनुधावंस्तत्रागत्य देवदत्तं दृष्ट्वा पुरमार्गमजानन्पप्रच्छ । तेन पृष्टो देवदत्तः स्वयमग्रे गच्छन्राजानं नगरमनयत् । अनन्तरं राजा देवदत्तं बहुधा संमान्य कुत्रापि राजकार्ये न्ययुङ्क्त । एवं महान्कालः समतिचक्राम । अथैकदा राजा तं मध्येसभमवादीत्— 'कथमहं त्वत्कृतादुपका-

रादुत्तीर्णो भविष्यामि । यन्मां महतोऽरण्यान्नगरमनयः' इति । ब्राह्मणस्तु राज्ञो वचनं श्रुत्वा स्वमनसि विचारयति स्म– 'किमयं राजा मामेवं वदति । किं नामाहमुपाकरवम् । किमेतत्सत्यमुत मिथ्या? । अस्य तत्त्वं बोधेयम्' इति । तत एकस्मिन्दिवसे राजकुमारमपहृत्य स्वमन्दिरे संगोप्य तस्य कण्ठभूषणमेकं स्वभृत्यहस्ते दत्त्वा विपण्यां विक्रेतुं प्रैषयत् । अस्मिन्नवसरे राजकुमारः केनाप्यपहृतो मारितश्चेति राजमन्दिरे महान्कोलाहलः समभवत् ॥

---

## चतुर्विंशः पाठः ।

राजापि पुत्रमार्गणाय सर्वत्राधिकारिणः प्राहिणोत् । ते च सर्वतः परिभ्रमन्तो विपणिमध्ये दैवादाभरणहस्तं देवदत्तभृत्यमपश्यन् । ततस्तदाभरणं राजकुमारस्येति ज्ञात्वा तं बद्ध्वा राजसमीपं निन्युः । राजापि तं दृष्ट्वोवाच— 'रे भृत्य, कथमेतदाभरणं तव हस्ते समागतम् ?' इति । भृत्यः प्राह — 'अहं देवदत्तस्य भृत्यः । विपणिमध्ये एतदाभरणं विक्रीय धनमानयेति प्रेषितोऽस्मि' इति । ततो राजा देवदत्तमाहूय पप्रच्छ— 'एतदाभरणं कस्ते ददौ ?' इति । देवदत्तः प्रत्यभाषत– 'अहमेव धनुलोलुपस्तव कुमारं हत्वा भूषणानि गृहीत्वा तेषामिदमेकमाभरणं विक्रेतुमदाम् । इदानीं यत्तुभ्यं रोचते, तत्कुरु । मम प्राक्तनकर्मवशादेवं बुद्धिरुत्पन्ना' इति । तदाकर्ण्य राजा किमपि प्रतिकर्तुं न शशाक । तदा सभ्यः

कश्चिदाह– 'अहो सर्वधर्मज्ञाऽत्रवेदितायं कथमीदृशे कर्मणि बुद्धिमकरोत्' इति । अपरः कश्चिदुवाच– 'स्वकर्मणा प्रेरितस्यैवं बुद्धिरजायत । किमत्र चित्रम् ?' इति । इतरे केचन राजानमब्रुवन्– 'देव, यदयं बालघाती सुवर्णस्तेयी च, ततः खादिरेण शूलेन हन्तव्यः' इति । तदा मन्त्रिणः प्राहुः– 'इमं तिलशः खण्डयित्वैतन्मांसेन गृध्रेभ्यो बलिर्दातव्यः' इति । तेषां वचनं श्रुत्वा राजा जगाद– 'भोः सखायः, अयं मामाश्रितः, पुरमार्गप्रदर्शनादुपकारी च । अतोऽस्मिन्गुणदोषचिन्ता न कर्तव्या ।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।१७।

अथ देवदत्तमवलोक्य 'सखे, किंचिदपि भयं चेतसि मा कार्षीः । मम पुत्रो बलीयसा पुराकृतेन कर्मणा हतः । किं नाम त्वया कृतम् । अन्यच्च, महत्यरण्ये पतितं मां नगरमनैषीः किल । अतः प्रत्युपकारसहस्रैरपि न तावकमृणमपनेतुं प्रभवामि' इति समाश्वास्य तं वस्त्राभरणादिना संभाव्य विससर्ज । देवदत्तस्तु परमानन्दभरितस्तं कुमारं स्वगृहादानीय तद्गोपनकारणमप्यभिधाय, राज्ञे ददौ । ततो राजा परं संतुष्य देवदत्तं भूयोऽपि बहुधा संमान्य प्रेषयामास । सोऽपि राज्ञा संमानितः परं विस्मयमापन्नो राज्ञः कृतज्ञतामौदार्यादिकं च प्रशंसन्स्वगृहमयासीत् ' ।

इति कथां सालभञ्जिकाकथितामाकर्ण्य, भोजस्तूष्णीं निर्जगाम ॥

## पञ्चविंशः पाठः ।

पुनरपि भोजे समागत्य सिंहासनसोपाने पदं विन्यस्यति, पञ्चमी सालभञ्जिका निवार्य गिरमेवं व्याजहार–

"विक्रमे महीं पालयति सत्येकदा कश्चिद्रत्नवणिक् समागत्यानर्घमेकं रत्नं राजहस्ते समर्पितवान् । राजा दीप्यमानं तदादाय, तस्मै भूरि द्रव्यं दत्त्वा 'भोः सार्थवाह, किमीदृशमन्यदस्ति?' इत्यपृच्छत् । वणिक् 'देव, नात्र किमप्यस्ति । ग्रामे तु दश विद्यन्ते । यद्यपेक्षा देवस्य, तर्हि प्रेषयिष्यामि' इत्युवाच । अनन्तरं राजा तेषामेकैकस्य चतुःसहस्रं सुवर्णानि मूल्यं निर्णीय तावन्ति धनानि दत्त्वा सहैव तेन चतुरमेकं भृत्यं प्राहिणोत् । 'अष्टभिर्दिवसैरत्रागन्तव्यम्' इति चादिदेश । सोऽपि 'यदाज्ञापयति देवः' इति तदाज्ञां शिरसि कृत्वा झटिति निर्जगाम । रत्नानि गृहीत्वा समागच्छति च तस्मिन्, मध्यमार्गे महती वृष्टिः समभवत् । तया चोभयकूलंकषा नद्येका प्रवहति स्म । स तदुत्तरं तीरं गन्तुमशक्नुवन्, नाविकमाहूयावदत्– 'नाविक, रत्नहारं मामिमां नदीमुत्तारय' इति । नाविकः प्राह– 'अये पथिक, एषा नदी वेलामतिक्रम्य प्रवहति । कथमुत्तार्यताम् । किं च, महानद्युत्तरणं बुद्धिमता वर्जनीयम् । तथा चाहुः–

महानदीप्रतरणं महापुरुषनिग्रहम् ।
महाजनविरोधं च दूरतः परिवर्जयेत् ॥१८॥

भृत्यः 'अये कर्णधार, यदुक्तं त्वया तत्सत्यमेव । तथापि यद्यहमद्यैव रत्नैः सह देवस्य पादमूलं न गच्छेयम्, न दाज्ञाभङ्गाद्राजा मां निग्रहीष्यति । अतोऽवश्यमिदानीं मामुत्तारयितुमर्हसि' इत्यवदत् । 'तर्हि पञ्च रत्नानि यदि मह्यं दास्यसि, त्वामुत्तारयिष्यामि' इति नाविको जगाद । ततो भृत्यस्तस्मै पञ्च रत्नानि दत्त्वा, नदीमुत्तीर्य, राजसमीपमागत्य, सविनयं प्रणम्य, पञ्च रत्नानि तस्मै ददौ । तदा राजाब्रवीत्– 'कुत्रावशिष्टानि पञ्च रत्नानि?' इति । भृत्यः सर्वमपि वृत्तान्तं यथावदभिधाय "एतदाकर्ण्य, देवः प्रमाणम्' इति व्याहृत्य विरराम। राजा तु तद्वचनं श्रुत्वा परं संतुष्टोऽवशिष्टान्यपि रत्नानि तस्मै प्रादात् । भृत्यश्च परमानन्दभरितः स्वगृहमगात्" ।

इति कथां कथयित्वा सालभञ्जिका भोजमाह– 'यद्येवंविधमौदार्यं त्वयि विद्यते, तदोपविश' इति । तदाकर्ण्य भोजस्तूष्णीं न्यवर्तत ॥

---

॥ पञ्चममुपाख्यानम् ॥

---

## षड्विंशः पाठः ।

भूयोऽप्येकदा शुभे मुहूर्ते सिंहासनमध्यासितुं भोजराजे समागते, अन्या पाञ्चालिका निवार्य अभणत्–

"विक्रमादित्यो राज्यं परिपालयन् एकदा वसन्तोत्सवे सकलान्तःपुरवधूसमेतो विहारार्थमुद्यानमगमत् । तत्र च पुष्पापचयेन मन्दगमनेन स्वैरसंलापेन पिकादिकूजितश्रवणेन च

कालं कमपि अतिवाहयामास । तत्र च कश्चन ब्रह्मचारी कुत्र-चित्तरुमूले तपस्यन् चिराय वर्तते स्म । स च एवं विलासिनीभिः सह विहारसुखमनुभवन्तं राजानमवलोक्य स्वमनस्यचिन्तयत्– 'अहो चिराय तपश्चरता मया वृथैव भूयान्कालो गमितः । स्वप्नेऽपि किंचित्सुखं नानुभूतम् । यावज्जीवं कष्टमनुभूय, तपः कुर्वतो नरस्य मरणानन्तरं परलोके शाश्वतं सुखमिति मूर्खाणामेषा विचारणा । अतो मया इतः प्रभृति संसारसुखमेव सेवनीयम् । सांप्रतं च वदान्यो विक्रमार्क इह समागतः । तमुपसृत्य प्रार्थयिष्ये' इति । एवं समालोच्य विक्रमार्कसमीपं गत्वा, 'महाराज, अहमत्रैवोपवने जगदम्बिकापरिचर्यां कुर्वन्वसामि । अहं तु ब्रह्मचारी । पूर्वेद्युर्निशायां जगदम्बिका सुप्रसन्ना भूत्वा स्वप्ने 'भो वत्स प्रसन्नास्मि ते । अलमितस्तपस्यया । इतः प्रभृति गृहस्थाश्रमं स्वीकृत्य संसारसुखमनुभवन् कालं नेतुमर्हसि । श्वः प्रातश्च विक्रमार्को नियतमत्रागमिष्यति । तमुपसृत्य वृत्तान्तमिमं कथय । स ते मनोरथं पूरयिष्यति । तस्योपकारेण गृहस्थो भूत्वा पुत्रमुत्पाद्य पश्चान्मोक्षे मनः कुरु । अन्यथा तव सुगतिर्न भविष्यति ॥

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥१९॥

इत्युक्त्वा मां तदानीमेव तिरोबभूव । ततोऽहं प्राबुध्ये । सर्वमिदं श्रुत्वा भवान् प्रमाणम्' इत्यभिधाय विरराम ॥

तच्च ब्रह्मचारिणो मिथ्यावचनमनुनिशम्य मेधावी विक्रमार्कः, 'कथमेतदुपपद्यते? तपस्यन्तं ब्रह्मचारिणं जगदम्बिका बलादेवं प्रवर्तयतीति न कदाचिदपि घटते । नूनमयमेव चपलचित्तस्तपसो भ्रश्यन्नस्मानेवमभिदधाति । यथा तथा वा भवतु । सर्वथा विप्रस्यास्य समीहितं मया संपादनीयम्' इति निश्चित्य तत्रैव पत्तनमेकं निर्माप्य, तत्रैव तं ब्रह्मचारिणं प्रतिष्ठाप्य, तस्मै शतं कुमारिकाः पञ्चशतं तुरगान् चतुःसहस्रं भटांश्च समर्पयामास । सोऽपि ब्रह्मचारी पूर्णमनोरथः संतुष्टान्तरङ्गः सहस्रशो विक्रमार्कमाशीर्भिरभिनन्द्य, तदाज्ञानुसारेण ताः शतं कुमारिका यथाविधि परिणीय गार्हस्थ्यमाश्रित्य तदुचितानि कर्माण्याचरन् सुखेन कालं यापयामास" ।

इति कथां कथयित्वा सालभञ्जिका अवदत्- 'यद्येवंविधमौदार्यं त्वयि विद्यते, तर्हि सिंहासनमिदमारुह्यताम्' इति । भोजस्तु श्रुत्वा तादृशमौदार्यातिशयमात्मन्यपश्यन्, मौनेन प्रतिनिवर्तते ॥

---

॥ षष्ठमुपाख्यानम् ॥

---

## सप्तत्रिंशः पाठः ।

पुनरपि कदाचिद्भोजः शुभे मुहूर्ते समुचितसंनाहः सिंहासनमारोढुं यावदुपचक्रमे, तावदन्या सालभञ्जिकावदत्- "भो राजन्, विक्रमे राज्यं कुर्वति, लोके दुर्जनः कोऽपि नासीत् । सर्वे जनाः सदाचारसंपन्नाः । ब्राह्मणा वेदशास्त्राभ्या-

सादिस्वधर्मचर्यापराः षट्कर्मनिरताश्च बभूवुः । सर्वेषामपि वर्णानां पापाद्भयम्, प्राणिषु दया, परमेश्वरे भक्तिः, देहे निर्ममता, नित्यानित्यवस्तुविचारः, हृदये चौदार्यमभूत् । एवं सर्वोऽपि लोकः पावनान्तःकरणो राज्ञः प्रसादात्सुखेनावर्तत । तदा च तत्र नगरे धनदो नाम कश्चिद्रूजः समभूत् । तस्य संपदां मर्यादा नास्ति । यानि वस्तूनि भुवने सुदुर्लभानि, तानि तत्र सुलभानि । एवं सकलसंपत्समाश्रितस्य तस्यैवं बुद्धिरुदभूत्— 'हन्त असारोऽयं संसारः । सर्वमपि वस्तुजातमनित्यम् । अतः संसारिणां धर्म एव शरणम् । ततः समुपार्जितं द्रव्यं सत्पात्रेभ्यो दातव्यम्' इति । एवं बहुधा विचार्य श्रोत्रियानाहूय सर्वमेव निजधनं तेषु विनियुज्य, पवित्रान्तःकरणः पुनरपि विचारयति स्म— 'अहो मयैतदनुष्ठितं दानव्रतादिकं तदा सफलं भवेत्, यदा द्वारवतीं गत्वा कृष्णं द्रक्ष्यामि' इति । ततः समुद्रतीरं गत्वा, कंचन नाविकमाहूय समुचितं वेतनं निर्णीय भिक्षुकयोगिनो वैदेशिकान्नावमारोप्य स्वयं चावरुह्य तैः सह धर्ममेदुरास्तास्ताः कथाः कथयन्, यावदागच्छत्; तावत्समुद्रमध्ये समुदीर्णः कश्चित्पर्वतस्तेन दृष्टः । तत्र महानेको देवालयोऽदृश्यत । धनदस्तु देवालयं गत्वा भुवनेश्वरीं नमस्कृत्य, तस्या वामभागे छिन्नमस्तकं स्त्रीपुरुषयुगलं दृष्ट्वा पुरःस्थितभित्तिभागे लिखितान्यक्षराणि पपाठ— 'यदा कोऽपि परोपकारी परमैश्वर्यसंपन्नो द्वात्रिंशल्लक्षणोपेतः स्वकण्ठरुधिरेण भुवनेश्वरीं प्रीणयिष्यति, तदेदं स्त्रीपुरुषयुगलं सजीवं भविष्यति' इति । एवं

पठित्वा सविस्मयो धनदः पुनरपि नावमारुह्य द्वारवतीं गत्वा, श्रीकृष्णं स्तुत्वा, यद्यदपूर्वं वस्तु समानीतम्, तत्सर्वं समर्प्य, तत्र दिनत्रयमुषित्वा, ततो निर्गत्य, कतिपयैर्दिनैर्निजनगरमाजगाम । आगत्य च सर्वान्बान्धवान्कृष्णप्रसादेन संभाव्य किमप्यपूर्वं वस्तु गृहीत्वा प्रभाते विक्रमार्कं द्रष्टुं जगाम । गत्वा च सविनयं कृष्णप्रसादं दत्त्वा तदादिष्टमासनमध्यास्त । ततो राज्ञा पृष्टः, समुद्रमध्यदृष्टं भुवनेश्वरीदेवालयवृत्तान्तमवादीत् । तच्छ्रुत्वा समुपजातकुतूहलो राजा तेन सार्धं प्राप तदपूर्वं स्थानम् । तत्र च देवतावामभागे पतितं कबन्धयुगलमपश्यत् । अपाठीच्च तान्यक्षराणि । तदनन्तरं राजा भुवनेश्वरीं स्तुत्वा स्वखड्गं कोशादाकृष्य यावत्कण्ठे चकार, तावत्कबन्धयुगलं सशिरः सजीवं च समभूत् । देवतापि राज्ञो हस्तस्थितं खड्गमाकृष्याब्रवीत्– 'भो राजन्, प्रसन्नास्मि । वरं वृणीष्व' इति । राजाभ्यधात्— 'भो देवि, यदि प्रसन्नासि, तर्ह्यस्य मिथुनस्य राज्यं देहि' इति । ततो देवी तथेति तस्य मिथुनस्य राज्यमदात् । राजापि धनदेन सह निजनगरमाजगाम" ।

इति कथां सालभञ्जिकानिगदितां श्रुत्वा भोजो निववृते ॥

---

## अष्टाविंशः पाठः ।

भूयोऽपि भोजराजे यथापूर्वमागच्छति, पाञ्चालिकान्या निषिध्य जगाद– विक्रमे राज्यं कुर्वति सत्येकदा चारा भूमण्डलं परिभ्रम्य राज्ञः सकाशमागत्य राज्ञा पृष्टा व्यजिज्ञपन्– 'देव,

काश्मीरदेशे महाद्रव्यसंपन्नः कश्चिद्वणिगास्ति । स च धर्मनिरतेन चेतसा पञ्चक्रोशविस्तारं तटाकमेकमखनत् । तन्मध्ये किंचिद्बिलमदृश्यत । तत्र च देवो नारायणः शयानो दृष्टः । तस्य चायतनं कारयामास । परमुदकं न लेभे । ततो जलोद्गमनिमित्तं वरुणमुद्दिश्य ब्राह्मणैर्जपमकारयत् । सोऽपि वृथा बभूव । ततः खिन्नमानसे वणिजि तटाकतीरे समुपविश्य 'अहो नैकेनाप्युपायेन जलं लभ्यते । वृथा मे श्रमो जातः' इति चिन्तयति, काप्यमानुषी वागधिगगनमेत्रमश्रूयत— 'भो वणिक्पुत्र, किमर्थं चिन्ताव्याकुलोऽसि । महाराजलक्षणयुक्तस्य पुरुषस्य कण्ठरक्तेन यदा तटाकं सिञ्चसि, तदा विमलमुदकमाविर्भविष्यति, नान्यथा' इति । तदाकर्ण्य स वणिक् तटाकतीरे महदन्नसत्रमकल्पयत् । तत्र च भोक्तुं स्वदेशवासिनो विदेशवासिनश्च समायान्ति । तदा च तत्र स्थिता वणिगादेशकारिणो भृत्यास्तेषां पुर एवं वदन्ति— 'यः कोऽपि स्वकण्ठरुधिरेण तटाकं सिञ्चति, तस्य शतभारं सुवर्णं दीयते' इति । तद्वचः सर्वेऽपि शृण्वन्ति । परं तु न कोऽपि तत्साहसमङ्गीकरोति । एवंविधं महच्चित्रं दृष्टम्' इति । तच्छ्रुत्वा विक्रमः स्वयं तत्र गत्वा बिलशायिनं देवं प्रणम्यातिमनोहरमतिविशालं च तटाकं दृष्ट्वा स्वमनस्यचिन्तयत्— 'यदि मम कण्ठरक्तेनैनं तटाकं सिञ्चामि, तर्हीदं जलैः संपूर्णं भवेत् । अनेन च सकललोकानामुपकारो भविष्यति । इदं तु मम शरीरं वर्षशतमपि स्थित्वा पश्चाद्विनाशमेव यास्यति । अतः सकललोकोपकारायेदं शरीरमवश्यमिदानीं

मयोपयोक्तव्यम्' इति । एवं विचिन्त्य, यावत्कण्ठे खड्गमकरोत्, तावत्स भगवान्खड्गमाक्षिप्य जगाद— 'वीर, तवाहं प्रसन्नोऽस्मि । अलमनेन साहसेन । वरं वृणीष्व' इति । राजावदत्— 'देव, यदि मम प्रसन्नोऽसि, तर्हीमं तटाकं जलेन परिपूरय' इति । देवः प्राह— 'भो राजन्, त्वमस्मात्स्थानान्निर्गत्य तटाकतीरं प्राप्य यावत्परावृत्य पश्यसि, तावज्जलैः परिपूर्णस्तटाको भविष्यति' इति । ततो राजा ससंभ्रमं तटाकतीरमारुरोह । सरश्च जलैः परिपूर्णमदृश्यत । अनन्तरं परमानन्दभरितेन वणिजा स्तूयमानो राजा तेन समर्पितं शतभारं सुवर्णं कस्मैचिद्विवाहार्थिने दरिद्राय ब्राह्मणाय दत्त्वा स्वनगरमगमत् ॥

इति सालभञ्जिकोक्तां कथां श्रुत्वा भोजराजः स्वस्मिंस्तादृशगुणानपश्यंस्तूष्णीं न्यवर्तत ॥

---

॥ अष्टममुपाख्यानम् ॥

---

# एकोनत्रिंशः पाठः ।

भूयोऽपि भोजमहीपाले सकौतुकसंभ्रममागच्छति, नवमी सालभञ्जिका सहासमिदमभाषत— 'भूपाल, सिंहासनमारोढुं ससंभ्रमोऽसि । दुर्लभं ते विक्रमार्कगतं साहसौदार्यादिकम् । तद्विरमास्मात्समुद्यमात् । श्रूयताम्—

'विक्रमे राज्यं कुर्वति, भट्टिः प्रधानमन्त्री । उपमन्त्री गोविन्दः । चन्द्रः सेनापतिः । तस्य पुत्रः कमलाकरो नाम । स तु प्रतिदिनमाकण्ठं भुञ्जानो वस्त्रभूषणताम्बूलादिना शरीरमलंकृत्य विषयसुखमनुभवन्नासीत् । एकदा दुर्वृत्तं तं सुतमाहूय पिता जगाद– 'भोः कमलाकर, स्वकर्मवशादयमात्मा नानाजातिषु जन्म प्राप्नोति । कदाचित्सत्कर्मवशान्मनुष्यजातिं प्रविशति । तत्रापि ब्राह्मणकुले जन्म महता पुण्येन लभ्यते । तल्लब्ध्वापि त्वं दुर्वृत्तोऽसि । सर्वदा बहिरेव संचरसि । भोजनकाले परं भवनमागच्छसि । अनुचितमिदं न जानासि । किं च तवायं विद्याभ्यासकालः । इदानीं विद्यां नाभ्यस्यसि, तर्हि परत्र तत्र महान् परिवादो भविष्यति । तथा चोच्यते–

येषां न विद्या न तपो न दानं न चापि शीलं न गुणो न धर्मः । ते मर्त्यलोके क्षितिभारभूता मनुष्यरूपाः पशवश्चरन्ति ॥२०॥ इति ।

अन्यच्च, वत्स यावदहं जीवामि, तावत्त्वया विद्याभ्यसनीया । अन्यदा तु सा तव दुष्प्रापैव । अभ्यस्ता तु सा कल्पलतेव सर्वं साधयेत् । तथा च श्रूयते–

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु वितनोति तनोति वित्तं
किं वा न साधयति कल्पलतेव विद्या ॥ इति' ।

## त्रिंशः पाठः ।

एवं पितृवचनं श्रुत्वा पश्चात्तापपीडितः कमलाकरः 'यदाहं सर्वज्ञो भविष्यामि, तदैव पितृमुखं द्रक्ष्यामि' इति प्रतिज्ञाय काश्मीरदेशं गत्वा तत्र चन्द्रमौलिभट्टनामानमुपाध्यायमुपसृत्य सविनयं प्रणम्य 'भोः स्वामिन्, मूर्खोऽहं भवतः सकाशाद्विद्याभ्यासं कर्तुमागतोऽस्मि । प्रसीद । यथाहममितज्ञो भवेयं तथा मामध्यापयितुमर्हसि' इति वदन् पुनः पुनरवन्दत । उपाध्यायोऽप्येनमङ्गीचकार । कमलाकरश्च गुरुं शुश्रूषमाणः पपाठ । एवमप्रमादं शुश्रूषया विद्यामभ्यस्यतस्तस्य महान्कालोऽतिचक्राम । तत एकदोपाध्यायस्तस्योपरि कृपातरङ्गितान्तरङ्गः सिद्धसारस्वतमन्त्रमुपादिदेश । तेन चोपदेशेन सर्वज्ञो भूत्वा कमलाकरः कृतार्थमात्मानं मत्वा सप्रदक्षिणप्रणाममुपाध्यायस्यानुज्ञां गृहीत्वा पितृदर्शनलालसः स्वनगरं प्रत्यागच्छन्मार्गवशात्काञ्चीनगरमगमत् । तत्र चानन्यसाधारणरूपसंपन्ना नरमोहिनी नाम काचिद्वनितासीत् । यः पुनरनया सह तल्पे निद्रामनुभवेत्, तस्य रुधिरं विन्ध्याचलनिवासी कश्चिद्राक्षसो निरवशेषं पीत्वा तं मारयेत् । कमलाकरोऽप्येतदाश्चर्यं तत्र श्रुत्वा निजनगरमाजगाम । आगतं च कुमारममितज्ञं ज्ञात्वा जनकः परं ननन्द । परेद्यवि एष कमलाकरः पित्रा सह राजानं द्रष्टुं गत्वा विक्रमायाशिषमवदत् । आस्थाय च समुचितमासनम्, आत्मनः कलावैदग्ध्यमदर्शयत् । कथाप्रसङ्गेन च काञ्चीनगरे श्रुतं तदद्भुतमाचचक्षे । अनन्तरं विक्रमार्कः सहैव तेन काञ्चीनगरमाग-

स्य नरमोहिन्या गृहं प्रविवेश । सापि तौ राजार्हेणोपचारेण तोषयित्वा सविनयमेनं राजानं व्यजिज्ञपत्– 'देव धन्यास्मि। पवित्रमभूदिदं भवनम्, यतो भवतश्चरणकमलधूलिभूषितमभूत्।' इति । राजा ततस्तया दत्तां ताम्बूलवीटिकां जग्राह । इत्थं रात्रौ प्रथमः प्रहरोऽतीयाय । नरमोहिनी तु सुष्वाप । द्वितीये प्रहरे राक्षसः समागत्य नरमोहिनीमेकाकिनीं मञ्चे सुप्तां दृष्ट्वा निर्जगाम । तदा राजा तं केशे गृहीत्वा कृपाणेन कण्ठमच्छिनत् । तदा जातेन कोलाहलेन नरमोहिनी प्रबुध्य हतं राक्षसं विलोक्य परं संतुष्टा, 'देव, भवत्प्रसादादहं निर्भया जातास्मि । इतः प्रभृति यदाज्ञापयति भवान्, तदाचरितुमहमायत्तास्मि ' इति राजानं विज्ञापयामास । राजा ' यदि मयोक्तं करिष्यसि, तर्ह्यमुं कमलाकरं भजस्व ' इत्याह । ततः सा नरमोहिनी कमलाकरमभजत् । विक्रमोऽप्युज्जयिनीमाजगाम " ।

इति सालभञ्जिकोक्तां कथां श्रुत्वा भोजस्तूष्णीं न्यवर्तत ॥

॥ नवममुपाख्यानम् ॥

## एकत्रिंशः पाठः ।

भूयोऽपि कदाचिद्भोजभूपालो यावत्सिंहासनमारुरुक्षत्, तावदपरा पाञ्चालिका निषिध्य ' भो राजन्, विक्रमस्येवौदार्यादयो गुणा यदि त्वयि विद्यन्ते, तदास्मिन्नासने समुपविश' इत्याह । ततो राजनि 'कथय तस्यौदार्यादिवृत्तान्तम्' इति पृच्छति, पाञ्चालिका प्राह —

'भो राजन्, श्रूयताम्— विक्रमे सिंहासनमिदमास्थाय विश्वंभरां पालयति, योगी कश्चिदुज्जयिनीं प्रत्यागच्छत् । स च वेदवेदाङ्गादिसकलशास्त्रविचक्षणः । किं बहुना । तत्सदृशो नान्योऽस्ति भूतले । एकदा विक्रमस्तस्य प्रसिद्धिं निशम्य तमाह्वातुं पुरोहितं त्रिविक्रमं प्रेषयामास । स च तदन्तिकं गत्वा नमस्कृत्याब्रवीत्— 'भोः स्वामिन्, राजा विक्रमो भवन्तं द्रष्टुमिच्छति । तदागच्छतु भवान्' इति । योगी प्राह— 'राजदर्शनेन किमस्माकमस्ति प्रयोजनम् ? पश्य—

भुञ्जीमहि वयं भिक्षामाशा वासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥२२॥

पुरोहितस्तदाकर्ण्य राजसमीपमागत्य न्यवेदयत् । ततो राजा स्वयमेव तत्संदर्शनार्थमागत्य प्रणम्य, तदाज्ञयोपविष्टः, तेन सह नानाविधाः कथाः कुर्वन्, सुचिरमतिष्ठत् । तदा योगी प्राह— 'यदि त्वं साधयितुं प्रभवसि, तर्हि मन्त्रमेकमुपदिशामि । अमुं मन्त्रं वर्षमेकं ब्रह्मचर्येण जप्त्वा दूर्वाङ्कुरैर्होमं विधेहि । ततः पूर्णाहुतिसमये होमकुण्डात्कश्चित्पुरुषः फलहस्तो निर्गत्य फलं दास्यति । तदुपभुज्य जरामरणवर्जितो भविष्यसि' इत्युक्त्वा राज्ञे मन्त्रमेकमुपदिश्य स मुनिर्यथेच्छं जगाम । राजाप्युज्जयिनीं समया हायनमेकं ब्रह्मचर्येण मन्त्रं जप्त्वा दूर्वादलैर्हुत्वा पूर्णाहुतिमकरोत् । तदा होमकुण्डात्कश्चित्पुरुषो निर्गत्य दिव्यमेकं फलं राज्ञे ददौ । राजापि तत्फलं गृहीत्वा कृतकृत्यः

यावत् राजवीथ्यां समागच्छत्, तावत् कुष्ठव्याधिना विशीर्णसर्वावयवः कश्चन ब्राह्मणः, राजन्,

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च राजा चार्तिहरो गुरुः ॥

इति वदन्ति । अतोऽनेन व्याधिना विशीर्णं ममैतच्छरीरं यथा निरामयं सदनुष्ठानयोग्यं भवेत्, तथा विधातुमर्हसि'इति कृपणमभणत् । ततो राजा तस्मै तत्फलं ददौ । ततो ब्राह्मणः परमतुष्यत् । राजा स्वभवनं जगाम । ”

इति कथां दशमसालभञ्जिकोक्तां श्रुत्वा भोजस्तूष्णीं बभूव ॥

॥ दशममुपाख्यानम् ॥

## द्वात्रिंशः पाठः ।

पुनरपि भोजराजः सिंहासने समुपवेष्टुं यावदाजगाम, तावदन्या पाञ्चालिका निवार्य राजानमब्रवीत्—

“विक्रमे राज्यं कुर्वति सति, भूमण्डले दुर्जनः, पिशुनः, तस्करः, पापकर्मा वा न कोऽप्यासीत् । स सर्वान्प्रत्यर्थिभूभुजः स्वपादपद्मोपजीविनो विधाय राज्यमकरोत् । एकदा मन्त्रिषु राज्यभारं निधाय स्वयं योगिवेषेण देशान्तरं प्रति निर्जगाम । निर्गत्य च यत्र स्वचित्तस्य सुखमभूत्, तत्र कतिचिद्दिनान्यतिष्ठत् । यत्र चाश्चर्यं दृष्टम्, तत्रापि कंचित्कालमनयत् । एवं पर्यटतस्तस्यैकदा कुत्रापि महारण्ये सूर्योऽस्तं जगाम । ततश्च

किंचन वृक्षमूलमाश्रित्योपविष्टः । तस्योपरि वृद्धश्चिरजीवी नाम कश्चित्पक्षिराजस्तस्थौ । तस्य पुत्राः पौत्राश्च प्रातर्देशान्तरं गत्वा स्वोदरमापूर्य सायं प्रत्येकमेकैकं फलं गृहीत्वा तस्मै चिरजीविने प्रतिदिनं दिशन्तः सुखमूषुः । तस्यां च रात्रौ चिरजीवी सुखोपविष्टः सन् पक्षिणोऽपृच्छत्— 'भोः पुत्राः, परितः पर्यटन्तो यूयं किमद्भुतमपश्यत' इति । तत्र पटुचञ्चुर्नाम कश्चित्प्राह— 'नाहं किमप्यद्भुतमद्राक्षम् । अपि तु परेद्यवि मम महद्दुःखं भविष्यति । अस्त्युत्तरदेशे शैवालको नाम पर्वतः । तत्समीपे पलाशनगरं नामाग्रहारोऽस्ति । तत्र च पर्वते कश्चिद्राक्षसः प्रतिदिनं नगरमागोगनान जनान्बलात्पर्वतं नीत्वा भक्षयन्नासीत् । एकदा तु जनाः 'भो राक्षस, यथेच्छं त्वं संमुखागतान् पुरुषान् मा भक्षय । वयं तुभ्यमेकं पुरुषं प्रतिदिनमाहारार्थं दास्यामः' इत्यभ्ययाचन्त । सोऽप्येतदङ्गीचकार । अनन्तरं महाजनाः प्रतिदिनं गृहक्रमेणैकं पुरुषं तस्मै प्रायच्छन् । एवं महानतिचक्राम कालः । अद्य मम पूर्वजन्मनिमित्तभूतस्य ब्राह्मणस्य बलिवासरः संप्राप्तः । तस्य त्वेक एव पुत्रः । यदि तं दद्यात्, तदा संततिविच्छेदो भवेत् । यद्यात्मानमेव प्रयच्छति, तदा भार्यात्यन्तवृद्धा विधवा भवेत् । वैधव्यं पुनर्महद्दुःखमबलानाम् । तदेतद्दुःखं मयि संक्रामति' इति ॥

## त्रयस्त्रिंशः पाठः ।

तस्य वचनं श्रुत्वा तत्रान्ये पतङ्गा निजगदुः— 'सखे, स्वजनदुःखेन तव दुःखं युक्तमेव । तथा च श्रूयते—

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा स्वेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुद्गतं तदभवद्दृष्ट्वा स्वमित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥

इति । एवं पक्षिणां संलापं श्रुत्वा विक्रमस्तं पर्वतमयासीत् । तत्र च वध्यशिलां निरीक्ष्य तत्समीपस्थितसरोवरे स्नात्वा वध्यशिलायामुपविवेश । तत्रान्तरे राक्षसोऽपि समागत्य प्रहसितवदनमासीनं राजानं दृष्ट्वा विस्मितः पप्रच्छ— 'भो महासत्त्व, को भवान्? कुतः समागतः? यः पुनरत्र शिलायामुपविशति, स मामदृष्ट्वैव भयान्म्रियेत । त्वं पुनर्महाधैर्यसंपन्नः स्मेराननो दृश्यसे । अन्यच्च, यस्य मरणकालः संनिधत्ते, स ग्लानिं भजते । त्वं पुनरधिकां कान्तिं प्राप्य हससि' इति । राजा सखे, तव किमनेन विचारेण? मया परार्थमत्र शरीरं दीयते । तदात्मनः समीहितं कुरु' इत्यवदत् । निशाचरस्तु राज्ञः सौजन्यमालोक्य 'भो महापुरुष, यतः परार्थं शरीरं प्रयच्छसि, ततस्तवैव जीवितं श्लाघ्यम् । अथवा भवादृशां परोपकारिणां नैतच्चित्रम् । उक्तं च—

किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्यार्थं जायन्ते चन्दनद्रुमाः ॥२५॥

इति । अतो वयस्य, तवाहं तुष्टोऽस्मि । वरं वृणीष्व' इत्यब्रवीत् । राजा— 'यदि प्रसन्नोऽसि, तर्ह्यद्यप्रभृति मनुष्यभक्षणं

परित्यज । अत्रत्यान्विप्रान्परित्रायस्व । आत्मानमिव तान्पश्य' इत्याह । तच्छ्रुत्वा सोऽपि राक्षसस्तदाप्रभृति प्राणिवधं परितत्याज । राजापि कृतार्थो भूसुरान्प्रणम्य तैरभिनन्दितः स्वनगरमगमत् " ।

इतीमां कथां सालभञ्जिकाकथितामाकर्ण्य त्रपावनतवदनो भोजो निजान्तःपुरमयासीत् ॥

॥ एकादशमुपाख्यानम् ॥

## चतुस्त्रिंशः पाठः ।

भूयोऽप्येकदा भोजे सिंहासनमारोढुमायाति, अपरा सालभञ्जिका जगाद —

" विक्रमे राज्यं कुर्वति, तस्य नगरे भद्रसेनो नाम वणिगासीत् । तस्य पुरंदरो नाम पुत्रोऽभूत् । तस्य भद्रसेनस्य संपदां परिच्छेदो नादृश्यत । परं तु व्ययशीलो नासीत् । ततश्चिराद्भद्रसेने मृते, पुरंदरः पितुः सर्वस्वं प्राप्य कालोचितं त्यागं कर्तुमारभत । अथैवंविधमेनं धनदो नाम सुहृदभाषत— 'सखे पुरंदर, वणिक्पुत्रो भूत्वापि क्षत्रियकुमार इव व्ययं करोषि । एतद्वणिक्कुलसंभवस्य तव नोचितम् । वणिक्पुत्रेणैकाकिनापि संपन्नेनापि द्रव्यसंग्रहः कर्तव्यः । वराटिकाया अपि व्ययो न कर्तव्यः । उपार्जितं द्रव्यं कस्यांचिदापदि उपकुर्यात्' इति । एतत् धनदवचनं श्रुत्वा पुरंदरः प्राह— 'सखे धनद,

समुपार्जितं वित्तं कस्यांचिदापद्युपयोगाय भवतीति यो वदति, स विचारशून्यः । यदा त्वापदः समायान्ति, तदोपार्जितं धनमपि नश्यति । अतो विवेकिना पुरुषेणोचितो व्ययः कार्य एव' इति । एतच्छ्रुत्वा निरुत्तरीभूतो धनदस्तूष्णीमासीत् । ततः पुरंदरः पैतृकं सर्वमपि स्वं सत्पात्रेभ्यो विनियुक्तवान् । ततो वित्तहीनं पुरंदरं बन्धुमित्रादयो न मानयन्ति स्म । तेन सह गोष्ठीमपि नाकुर्वत । तदा पुरंदरः स्वमनस्यचिन्तयत्— 'यावत् हस्ते धनमासीत्, तावदेव सर्वे मित्रादयो मामसेवन्त। इदानीं मया सह गोष्ठीमपि न कुर्वन्ति । नीतिरियं सत्या 'यस्यार्थस्तस्य मित्राणि' इति । एवं विचिन्त्य निर्विण्णः—

दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
सर्वं पश्यामि देवेश न मां पश्यति कश्चन ॥

इति वदन्, स्वनगरान्निर्गत्य देशाद्देशमटन्, हिमाचलसमीपस्थं नगरमेकमगमत् । तत्र रात्रौ कस्यचिद्गृहस्य बहिर्वेदिकायां सुष्वाप । अर्धरात्रसमये च नातिदूरस्थवेणुवनमध्ये रुदत्याः कस्याश्चिदबलाया हाहाकारं श्रुत्वा 'किमेतत्' इति पुरंदरे दत्तकर्णे सति 'भो महाजनाः, मां परित्रायध्वम् । एष कोऽपि राक्षसो मां मारयति' इति वर्णावलिरश्रूयत ॥

---

## पञ्चत्रिंशः पाठः ।

ततः प्रभातसमये सविस्मयं पुरंदरस्तन्नगरवासिनो जनान् 'किमेतत्' इत्यपृच्छत् । ततः 'अत्र वेणुवनमध्ये प्रतिदिनमेवं

रात्रौ रोदनध्वनिः श्रूयते । परं तु कोऽपि भयान्न निर्गच्छति, न विचारयति च ' इति ब्रुवद्भिर्जनैर्निवेदितवृत्तान्तः पुरंदरस्ततो निष्क्रम्य स्वेच्छया कंचित्कालं पर्यटन्, स्वनगरमागत्य राजानमद्राक्षीत् । वेणुवनवृत्तान्तं चाकथयत् । अनन्तरं राजा तेन सह तन्नगरमवगाह्य, निशीथे मध्येवनमाक्रन्दध्वनिमाकर्ण्य, कृपाणपाणिः स्वयमेक एव तदरण्यं विवेश । तत्र चातिकरुणं रुदतीमनाथां मानुषीं पीडयन्तमेकं राक्षसमपश्यत् । अब्रवीच्च– 'रे पापिष्ठ, स्त्रियमनाथां किमेवं मारयसि?' इति । राक्षसः प्रत्याह– 'तव किमनेन विचारेण । यथागतमपसर । अन्यथा त्वमपि वृथैव मरिष्यसि' इति । तत उभयोर्विवादो महानभूत् । ततो राजा कृपाणमुत्कृत्य राक्षसं जघान । हते च तस्मिंश्छिन्नमूल इव महीरुहे निपतिते, प्रहृष्टा सा वनिता ससंभ्रमं समागत्य, राज्ञः पादयोर्निपत्य बभाण– 'स्वामिन्, तव प्रसादान्मम शापावसानमभूत् । महतो दुःखसागरादुद्धृतास्मि' इति । ततो राजा 'का त्वम्? कुतस्त्वामेष पापीयानपीडयत्? कियता च कालेनैवंविधामवस्थामनुभवसि?' इत्यपृच्छत् । वनिता 'देव, विज्ञापयामि । अस्मिन्नगरे महाधनसंपन्नः कश्चिद्ब्राह्मणोऽभूत् । तस्य भार्याहम् । व्यभिचारिणी । मम तस्मिन्प्रीतिलेशोऽपि नासीत् । तस्य तु मयि महाननुरागोऽवर्तत । स च यावज्जीवं दुःखमनुभूय देहावसानसमये मामशपत्– 'अयि दुराचारे, त्वमेव मम मृत्योर्मूलमसि । यदेवं मम मनोरथं वितथमकार्षीः, अनुभव तदद्यप्रभृति तत्फलम् । वेणुवनवासी कश्चिद्राक्ष-

सः अतिभयंकररूपो रात्रौ त्वामनिच्छन्तीमपि बलात्प्रतिदिनं पीडयिष्यति' इति । एवं शप्तया मया सपादपतनमभियाचितः, 'यदा कश्चिन्महापुरुषः समागत्य तं राक्षसं मारयिष्यति, तदा तव शापावसानं भविष्यति' इत्युक्त्वा तनुं तत्याज । दैवादद्य भवताहं शापान्मोचिता । अद्य मम प्राणा निर्गमिष्यन्ति । मम नवघटपरिमितं सुवर्णमस्ति । त्वं तद्गृहाण' इति । एवं विज्ञाप्य धनस्थानं राज्ञे निवेद्य सा प्राणांस्तत्याज । राजा च तद्धनं पुरंदराय वणिजे समर्प्य तेन सहोज्जयिनीमवाप ।"
इति सालभञ्जिकया कथितां कथां श्रुत्वा भोजस्तूष्णीं न्यवर्तिष्ट ॥

---

॥ द्वादशमुपाख्यानम् ॥

---

## षट्त्रिंशः पाठः ।

पुनरपि सिंहासनसमारुरुक्षया समागतं भोजभूपतिं प्रतिमापरा जगाद– "प्रथमं विक्रमगुणानाकर्णय । ततो यदि रोचते, तर्ह्यस्मिन्समुपविश । एकदा विक्रमार्को मन्त्रिषु राज्यभारं निधाय, स्वयं भूमिकान्तरतिरोहितः पृथिवीपर्यटनाय निश्चक्राम । निष्क्रम्य च प्रतिनगरं त्रीणि त्रीणि दिवसानि नयन्नगरमेकमगमत् । तन्नगरसमीपस्थितनदीतटे देवालये सर्वेऽपि महाजनाः कस्मादपि पौराणिकात्पुराणं शृण्वन्तीति निशम्य, नद्यां स्नात्वा, देवालयं गत्वा, देवं नमस्कृत्य, महाजनसमीपे स्वयमुपविश्य, पुराणश्लोकमेकमशृणोत्–

श्रूयतां धर्मसर्वस्वं यदुक्तं शास्त्रकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥२७॥

एवं पुराणश्रवणसमये, कश्चिद्ब्राह्मणः पत्न्या सह नदीमुत्तितीर्षुर्नदीमवगाह्य महापूरेण नीयमानो हाहाकारं कुर्वन्नदीतटे पुराणश्रवणतत्परान्महाजनानुद्दिश्यैवमवादीत्– 'भो भो महाजनाः, त्रायध्वं त्रायध्वम् । वृद्धः सपत्नीको ब्राह्मणोऽहं नदीप्रवाहे मुहुर्मुहुर्निमज्जन्नेष जीवितं त्यजामि । यः कोऽपि सत्त्वाधिको धार्मिको मम सभार्यस्य प्राणान् रक्षतु' इति । एवं प्रार्थयमानस्य तस्य दीनध्वनिं श्रुत्वा सर्वेऽपि जनाः सदयमपश्यन् । न कोऽपि तस्याभयं दातुं प्रबभूव । प्रवाहात्तं कूलमानेतुं कोऽपि न शशाक ॥

## सप्तत्रिंशः पाठः ।

ततो विक्रमो राजा 'मा भैषीः' इति धीरमुद्घुष्य नदीमध्यं प्रविश्य पत्न्या सह तं ब्राह्मणं महापूरादाकृष्य तटमानिनाय । राजन्, तस्य कियानानन्दः स्यादिति भवानेव विचारयतु । ततो ब्राह्मणोऽपि स्वस्थः सन्, राजानमवदत्— 'भो महापुरुष, ममैतच्छरीरं पुरा पितृभ्यामजनिष्ट । तत्प्रथमं जन्म । ततोऽस्य गायत्र्या द्वितीयं जन्म । इदानीं भवतस्तृतीयं जन्म प्राप्तम् । अतः प्राणदानान्महोपकारिणस्तवाहं किमुपकरिष्यामि । यदि विरमामि, मम जीवितं मुधैव स्यात् । अतो यथाशक्त्युपकरोमि । प्रतिगृहाण । गोदावर्युदकमध्ये द्वादश

वर्षाणि नामत्रयमन्त्रमजपम् । तत्पुण्यं तुभ्यं दीयते । अन्यच्च कृच्छ्रचान्द्रायणादिना संपादितं सुकृतमस्ति । तदपि गृहाण' इत्युक्त्वा राज्ञे तत्समग्रं पुण्यं समर्प्याशिषं प्रयुज्य, पत्न्या सह ब्राह्मणो निजस्थानं जगाम । अस्मिन्नेव समये भीषणः कोऽपि ब्रह्मराक्षसो राजसमीपमाजगाम । ब्राह्मणाः संभ्रान्तास्तमपश्यन् । राजापि तं दृष्ट्वापृच्छत्– 'भो महापुरुष, कस्त्वं कुतः समागच्छसि'? इति । राक्षसः 'अहमत्रैव नगरे दुष्प्रतिग्रहजीवी दुर्याचनापरश्च कश्चिद्ब्राह्मण आसम् । तदा विद्यागर्वाद्वृद्धानदूषयम् । तत्पापवशादस्मिन्नश्वत्थपादपे ब्रह्मराक्षसो भूत्वा नियुतं वर्षाणि तिष्ठामि । अद्य भवतोरुभयोर्गोष्ठीमाकर्ण्य समागतोऽस्मि । यतो निर्विशेषं सर्वेषामुपकरोषि, तन्ममाप्युपकर्तुमर्हसि' इति । राजा– किं वाञ्छसि? । राक्षसः 'इदानीं ब्राह्मणेन यत्पुण्यं तुभ्यं दत्तं तन्मह्यं दीयताम् । तेन पुण्येनाहमस्माच्छापादुत्तीर्णो भविष्यामि' इति तत्पुण्यमयाचत । राजा तदानीमेव तत्पुण्यं निर्विशङ्कं ददौ । सोऽपि तेन पुण्येन तस्मात्पापजन्मनो मुक्तो दिव्यरूपधरः सन्, राजानं प्रशस्य दिवं जगाम । राजापि तत्रत्यान्महाजनानापृच्छ्य स्वनगरमगमत्"।

इति सालभञ्जिका कथां कथयामास । भोजोऽपि तामाकर्ण्य विफलमनोरथो जगाम ॥

---

॥ त्रयोदशमुपाख्यानम् ॥

---

## अष्टत्रिंशः पाठः ।

भूयोऽपि कदाचन भोजे सिंहासनमारोढुमभिलषति, पाञ्चालिकापरा व्याजहार–

"वामन इव वृक्षाग्रस्थितं फलं सिंहासनमिदमधिगन्तुमभिलषसि । आकर्णय विक्रमस्यौदार्यम् । एकदा विक्रमो राजा पृथिव्यां कस्मिन्स्थाने किमाश्चर्यमस्ति ? का वार्ता ? किं तीर्थम् ? को वा देवतावासोऽस्ति ? इति विलोकयितुं तपस्विवेषेण परिभ्रमन्नगरमेकमगमत् । तत्समीपे तपोवनमेकमदृश्यत । तस्मिन्नेका नदी प्रवहति स्म । तत्र जगदम्बिकाया महान्प्रासादोऽभूत् । राजापि तत्र नदीजले स्नात्वा देवतां सप्रदक्षिणं प्रणम्य ततो निर्जगाम । तत्रान्तरेऽवधूतवासा नाम कश्चिद्योगी तत्रागत्य कृतप्रणामं राजानमन्वयुङ्क्त– 'कुत आगतो भवान् ?'। राजा 'अध्वनीनोऽहं कोऽपि तीर्थयात्राशीलः' इत्याह । योगी 'न त्वं विक्रमार्कः ? एकदा त्वामुज्जयिन्यामपश्यम् । अतोऽहं त्वां जानामि । किमर्थमागतोऽसि' इत्यपृच्छत् । राजाब्रवीत्– 'स्वामिन्, पृथ्वीपर्यटने महत्युत्कण्ठा समभूत् । तेन हि सर्वमाश्चर्यं विलोक्यते । भवादृशानां महतां संदर्शनमपि भविष्यति' इति । अवधूतवासा अपृच्छत्–– 'राजन्, तत्तादृशं राज्यं परित्यज्य कथं देशान्तरं परिभ्रमसि' इति । 'अहं सर्वमपि राज्यभारं मन्त्रिहस्ते निधाय समागच्छम्' इति राजा प्रत्यब्रवीत् । अवधूतवासाः 'अये त्वया नीतिशास्त्रविरोधः क्रियते । राज्यं स्ववशंवदमभूदिति नोपेक्षणीयम् । स्वायत्तमपि पुनः मु-

इदं कर्तव्यम्' इति । तच्छ्रुत्वा राजा बभाण— "भगवन्, सर्वमेतत्पौरुषं निरर्थकम् । दैवमेव सर्वस्य मूलम् । सुदृढेऽपि राज्ये, सत्यामपि साधनसमृद्धौ, संपन्नेऽपि पौरुषे, दैववैमुख्यान्नरः परिभूयते । तथा च वदन्ति नीतिविदः—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥२८॥ इति ।"

एवं राज्ञो वचनं श्रुत्वा प्रहृष्टो योगी तस्मै काश्मीरलिङ्गमेकं दत्त्वाभाषत– 'भो राजन्, एतत्काश्मीरलिङ्गं चिन्तामणिरिव चिन्तितानि वस्तूनि ददाति । तस्मादेतत्साधु पूजय' इति । राजा 'बाढम्' इत्युक्त्वा तं प्रणम्य तल्लिङ्गमादायागच्छन् नगरमार्गे कंचन ब्राह्मणमपश्यत् । स च राजानमुद्दिश्य, 'राजन्, मम सुचिराभ्यर्चितं शिवलिङ्गं केनाप्यपहृतम् । त्रिचतुराणि दिवसानि अहमुपवसामि । अनाराध्य लिङ्गं न भुञ्जीय । यदीदं लिङ्गं ददासि, तर्हि कृतार्थो भविष्यामि' इत्याचख्यौ । तच्छ्रुत्वा राजा तल्लिङ्गं तस्मै दत्त्वा निजनगरं जगाम ।"

इति सालभञ्जिकया कथितां कथामाकर्ण्य राजा भोजः 'नाहमिदं सिंहासनं समारोढुमर्हामि' इति मन्वानो न्यवर्तिष्ट ॥

॥ चतुर्दशमुपाख्यानम् ॥

# एकोनचत्वारिंशः पाठः ।

अथैकदा यथापूर्वं सिंहासनमारोढुमागते धराधिनाथे, पञ्चदशी पाञ्चालिका विहस्य राजानमभाणीत्—

'कथमिव भूयोऽपि समागतोऽसि । अद्यापि समाकर्णय तस्य विक्रमस्य औदार्यं महाधैर्यं च । विक्रमे राज्यं कुर्वति सति, तस्य वसुमित्रो नाम कश्चित्पुरोहित आसीत् । सोऽत्यन्तरूपवान् सकलकलाभिज्ञो राज्ञोऽत्यन्तप्रियतमः परोपकारी सर्वलोकप्रियो महाधनसंपन्नश्च । तस्य चैवंविधस्य चेतसि कदाचिदेवं बुद्धिरभूत्—'उपार्जितानां पापानां गङ्गास्नानादृते क्षयो नास्ति। उक्तं च—

अग्निं प्राप्य यथा सद्यस्तूलराशिर्विनश्यति ।
तथा गङ्गावगाहेन सर्वपापं विनश्यति ॥२९॥

एवं विचार्य वाराणसीं जगाम। तत्र गङ्गायां यथाविधि स्नात्वा विश्वेश्वरं माधवं च प्रणम्याभ्यर्च्य, स्वनगराभिमुखमागच्छन्मध्येमार्गमेकं नगरमगमत् । तत्र च नगरे शापदग्धा सुराङ्गना काचिद्राज्यमकरोत् । तस्याः पतिर्नासीत् । तत्र लक्ष्मीनारायणस्य महान्प्रासादोऽदृश्यत । तस्य च गोपुराग्रे चिरात्तस्मिन् महति लोहकटाहे तैलं संतप्यते स्म । तत्र नियुक्ताः पुरुषाः वैदेशिकान् जनानेवं ब्रुवन्तोऽवर्तन्त— 'यः कोऽपि सत्त्वाधिकः पुरुषोऽस्मिन्कटाहे निपतेत् , तस्येयं मन्मथसंजीविनी नामाप्सराः कण्ठे मालां समर्पयिष्यति' इति । वसुमित्रोऽपि तं

वृत्तान्तं श्रुत्वा तत्सर्वं दृष्ट्वा स्वनगरमाजगाम । आगत्य च सर्वैर्बन्धुभिः सह प्रभाते राजमन्दिरं गत्वा राजानं दृष्ट्वा राज्ञे गङ्गोदकं विश्वेश्वरप्रसादं च ददौ। ततो राज्ञा 'देशान्तरे किं किमद्भुतमद्राक्षीः?' इति पृष्टो वसुमित्रः सुराङ्गनातप्ततैलवृत्तान्तमकथयत् । अनन्तरं राजा तेन सह तत्स्थानं गत्वा तत्र नद्यां कृताभिषेको लक्ष्मीनारायणं नमस्कृत्य तप्ततैलमध्ये पपात । तत्रत्या जना महान्तं कोलाहलमकुर्वन् । राज्ञः शरीरं मांसपिण्डाकारमभूत् । तच्छ्रुत्वा मन्मथसंजीविनी पीयूषमानीय मांसपिण्डमभिषिषेच । ततो राजा दिव्यरूपधरः कुमारः संवृत्तः । ततो मन्मथसंजीविनी कुसुममालां महीपतेः कण्ठे निवेशयितुमाजगाम । तदा राजा 'भद्रे मदीयासि । मामकं छन्दमनुवर्तस्व । अमुं मम पुरोहितं वृणीष्व' इत्यादिशत् । सा च 'महाप्रसादः' इत्युक्त्वा पुरोहितकण्ठे कुसुममालामाक्षिपत् । राजापि तयोर्विवाहं कारयित्वा तं वसुमित्रं तत्रैव राज्येऽभिषिच्य निजनगरमगमत् ।"

इति कथां कथयित्वा सालभञ्जिका 'किमाकर्णितं विक्रमस्यौदार्यं धैर्यं च?' इति भोजमप्राक्षीत् । सोऽपि तूष्णींभूतस्तस्थौ।

॥ पञ्चदशमुपाख्यानम् ॥

## चत्वारिंशः पाठः ।

भूयोऽपि कदाचित्ससंभ्रममागच्छन्तं भोजमपरा सालभञ्जिका बभाण—

"राजन्, उपसंहर संभ्रमम् । तिष्ठ । सर्वमप्याकर्णय विक्रमस्य वदान्यभावम् । पश्चाद्यदि रोचते, तदोपविश । राजा विक्रमः कदाचिद्दिग्विजयार्थं कृतसंनाहो निर्गत्य, पूर्वदक्षिणपश्चिमोत्तरा दिशो विदिशश्च परिभ्रम्य, सर्वानपि नृपतीन्स्वपादपद्मसमाक्रान्तान्विधाय, तैः समर्पिता रथगजाश्वादीरुपदाः स्वीकृत्योज्जयिनीं समागत्य यावत्प्रवेष्टुमारभत, तावत्प्रधानभूतो दैवज्ञः प्राह– 'देव, चत्वारो दिवसा नार्हन्ति पुरप्रवेशम्' इति। तच्छ्रुत्वा राजा 'नगराद्बहिरुद्याने निवासं परिकल्पय' इति सचिवमादिदेश । सुमन्त्रनामा स च सचिवः ससंभ्रमं समुचितं निवासं कारयामास । तत्रान्तरे ऋतुर्वसन्तोऽपि शनैरुद्यानं सिषेवे । वकुलशाखिनो मुकुलिताः । माकन्दाः कुसुमिताः । मन्दानिलाः प्रचलिताः । इतस्ततो भ्रमराश्च माकन्दमकरन्दमत्ताभिर्भ्रमरीभिः सह झंकारमकुर्वन् । सर्वा अपि लताः कुसुमभूषिता अशोभन्त । इत्थं वसन्तवैभवेनातिमनोहरे तस्मिन्नुपवने विक्रमादित्यः कतिचन दिवसान्सुखेन यापयन्नवर्तत । तस्मिन्नवसरे कश्चिद्ब्राह्मणः कांचन कन्यकां गृहीत्वा राजसमीपमागत्य,

कल्याणदायि भवतोऽस्तु पिनाकपाणेः
पाणिग्रहे भुजगकंकणभीषितायाः ।
संभ्रान्तदृष्टि सहसैव नमः शिवायै-
त्यर्धोक्तिलज्जितनतं मुखमम्बिकायाः ॥३०॥

इत्याशिषं प्रयुज्य राज्ञा निर्दिष्टां असीमास्थाय 'राजन्, किंचिद्विज्ञापनीयमस्ति'इति विक्रममवादीत् । सोऽपि 'निःशङ्कं निवेद्यताम्' इत्याह । ब्राह्मणः 'अहं नदीवर्धमाननगरनिवासी । ममाष्टौ पुत्राः समजायन्त । कन्यका पुनः कापि नाजनि । ततः मभार्योऽहं जगदम्बिकायाः पुरतः 'अम्ब, यदि तवानुग्रहान्मम काचित्कन्यका जायेत, तदा त्वन्नाम तस्या विधाय तां तत्तुलितेन सुवर्णेन सह कस्मैचिच्चतुर्वेदविदे वराय दास्यामि' इति संकल्पितवान् । ततः कतिपयैरेव दिवसैस्तस्याः प्रसादादेषा कन्या जाता । अयं चास्याः पाणिग्रहणसमयः । अतोऽनया तुलितं सुवर्णं दातुं त्वत्तोऽन्यो नास्तीति मत्वा तवान्तिकमहमागमम् । तन्ममेमं मनोरथं परिपूरयतु भवान्' इति निवेदयामास । ततो राजा भाण्डागारिकमाहूय 'एतस्मै ब्राह्मणायैतत्कन्यापरिमितं सुवर्णं देहि' इत्यादिदेश । कोशाध्यक्षोऽपि 'महान्प्रसादः' इत्युक्त्वा तस्मै विप्राय तावत्काञ्चनं ददौ । ब्राह्मणोऽप्यतिसंतुष्टः सन्, कन्यया सह जगाम । ततो राजापि शुभे मुहूर्ते पुरं प्रविवेश ।"

इति पाञ्चालिकोदीरितां कथां निशम्य भोजस्तूष्णीं निर्जगाम ॥

॥ षोडशमुपाख्यानम् ॥



# GLOSSARY.

This follows text order.

By V. RAMAKRISHNA SASTRI, B.A., L.T.

प्रवीण Skilful.

अनुज Younger brother.

भुवनेश्वरी A goddess.

जरा Old age.

चातुर्वर्ण्यम् The four castes

विरत Freed from.

वसुंधरा Earth.

सुरनगर Heaven.

अन्तर mean while

नैपुण Skill.

विवाद Dispute.

अन्तर Difference.

वासव Indra.

बभाण Spoke.

जागर्ति Is awake (shines)

विचक्षण Wise.

सुधर्मा the Council of Gods.

मणिमय Set with gems.

द्वात्रिंशत् thirty-two.

सालभञ्जिका doll.

आपृच्छय taking leave.

दैवज्ञ astrologer.

सार्धद्विहायनी two and a half years old girl.

व्याकुल confounded.

सागरवेला seashore.

माणवक boy

अगोचर: beyond ou rrange

खड्ग sword.

यावनाल (Tamil) Choalm.

चणक (Tamil) Kadalai.

उत्थापन causing to leave.

मञ्च an elevated shed in a field for watchmen.

मृगया hunting.

क्षेत्र field.

उर्वारुकफलानि (Tamil) Kakkiri.

लाभ profit.

चखान dug up.

पुरुषमात्र as tall as a man

गर्त hollow.
उच्चलयामास moved.
गरिष्ठ heaviest.
बलि oblation.
संविधान arrangement.
खल rogue.
आटोप pride.
विशाला Ujjain.
प्रत्यर्थि enemy.
असूर्यम्पश्य not seeing the Sun.
आलेख्य picture.
सक्थि thigh.
तथ्य truth.
लक्ष्म sign.
सचिव minister.
वध्यस्थान A place for execution.
मिथ्या false.
भवन house.
भूगृह underground cell.
आदेश command.
एकदा once.
आखेट hunting.
दुर्निमित्त bad omen.
व्याघ्र tiger.
तुरग horse.

सरस् lake.
शाखा branch.
पिपासा thirst.
समापतत् came unexpectedly.
द्रुम tree.
भल्लूक bear.
सान्त्व conciliation.
अङ्क lap.
यादृशः कीदृशो वा who ever it be.
प्रमत्त careless.
मत्तः from me.
प्रभात morning.
समाचख्युः told.
समुपनत happened.
मार्गण search.
उन्माद insanity.
चिकित्सा treatment.
कर्मायत्त dependent on fate.
उद्घोषण proclaim.
यवनिका curtain.
आमन्त्रयत called.
वर्ण letter.
आचकर्ष drew.

संसर्ग companionship.
संभाव्य having rewarded
पुरन्ध्री matron.
नीराजित with waving lights as a mark of weal.
वन्दिन् panegyrist.
बधिर deaf.
कुब्ज hump-backed.
औदार्य liberality.
साहस daring.
कोटिश: in crores.
प्रत्यावर्तत went back.
भूयोऽपि once again.
चार spy.
कौतुक curiosity.
जलधारा mountain torrent.
पातक sin.
कलुष dirty.
पूत purified.
होमकुण्ड a hole in the ground for sacrificial fire
वत्सर year.
प्रेरित thrown out.
निर्झर stream
शीर्ष head.

उत्कृत्य having torn off
कृपाण sword
स्वस्थ calm
दीन poor.
अतिथि guest.
अतिशेते surpasses.
भोग enjoyment.
सर्वस्व the whole of man's possessions.
उपाक्रमत commenced.
शिल्पि architect.
यज्ञायतन place of sacrifice
समाजग्मु: arrived (they)
विक्षिप्य having placed
संभावना reward.
अवसर moment.
मूल्य cost.
उपहरिष्यामि I shall give as present.
प्रयच्छ give.
अमृतकल्प like nectar.
पदाति infantry.
अन्तरधात् disappeared.
अगमत् went.
अवभृथ a purifying bath at the end of a sacrifice.

मणि gem.

अर्थिसात्कृत placed at the disposal of the needy.

रोचते is pleasing.

गृहिणी wife.

स्नुषा daughter-in-law.

युधिष्ठिर Dharmaputra.

षड्रस the six tastes कटु, अम्ल, मधुर, लवण, तिक्त, कषाय.

तुरीया fourth

आरेभे began

हीन devoid of

श्रुतिस्मृति vedas & Dharma Sastras

भवानी Parvathi

प्रदोष nightfall

संभ्रम haste, hurry

मनसिकृत्य minding.

मन्दवासर Saturday.

चौल shaving ceremoney

गोदान the ceremoney of tonsure.

शील character.

गुह्य secret.

वाराणसी Benares.

उवास lived.

समिन् stick used for the sacred fire.

महन् + अरण्यम् = अरण्यानी big forest.

मृगया hunting.

सूकर pig.

अनयत led.

मध्येसभम् in the midst of the council.

न्ययुङ्क्त appointed.

मिथ्या false.

मन्दिर house.

भृत्य servant.

विपणि bazar.

विक्रेतुम् to sell.

लोलुप desirous

अदाम् I gave.

प्राक्तन ancient

प्रतिकर्तु to remedy

स्तयी thief

तिलशः bits

गृध्र eagle

ऋण debt

विस्मय wonder

कृतज्ञता gratitude
अयासीत् went
सार्थवाह merchant
चतुर clever
प्राहिणोत् sent
कूलंकषा lashing against the banks
नाविक boatsman
पथिक traveller
कर्णधार sailor
प्रमाणम् responsible
विरराम ceased
पुष्पापचय collecting flowers
तपस्यन् doing penance
वृथा vain
भूयान् much
शाश्वत eternal
वदान्य generous
परिचर्या service
पूर्वेद्युः previous day
तपस्या penance
श्वः to-morrow
प्रातः morning
तिरो बभूव disappeared
प्राबुध्ये (I) woke up
मेधावी very intelligent
रुधिर blood
कुतूहल enthusiasm
कबन्ध headless trunk
खड्ग sword
कोश sheath
आकृष्य drawing out
मिथुन couple
निववृते returned
घटते is possible
यथाविधि according to rules
परिणीय having married
मौन silence
संनाह preparation
निर्ममता indifference
पावन pure
ऊरुज Vaisya
पात्र worthy person
श्रोत्रिय proficient in the Vedas
वेतन salary
भिक्षुक beggar
वैदेशिक a foreigner
मेदुर full of
मस्तक head
भित्ति wall

व्यजिज्ञपन् respectfully told
वणिक् merchant
क्रोश two miles
बिल a cavity in the earth
गगन sky
चिन्ताव्याकुल care-worn
अन्नसत्र a feeding home
आक्षिप्य seizing
परावृत्य turning
दुर्वृत्त wicked
परिवाद scandal
दुष्प्रापा unobtainable
अमित unlimited
शुश्रूषमाण serving
लालस desirious of
वनिता woman
पीत्वा having drunk
परेद्यवि the next day
कथाप्रसङ्ग in the course of conversation
अद्भुत wonder
धूलि dust
ताम्बूलवीटिका a betel scroll
प्रहर a Jama i. e. a period of 3 hours
मञ्च cot

केश hair
आयत्ता ready
आरुरुक्षत् wished to ascend
विश्वंभरा Earth
आह्वातुम् to call
द्रष्टुमिच्छति=दिदृक्षते wishes to see
दूर्वाङ्कुर—(Tamil) அருகம்புல்
समया (ind.) near
दल blade
निशीर्ण scattered
आमय disease
पिशुन tale-bearer
उदर belly
ऊषुः dwelt (they)
परितः round about
संतति progeny
विधवा widow
संक्रामति approaches
पतङ्ग bird
वध्यशिला the stone of execution
स्मेर smiling
ग्लानि fatigue
परिच्छेद measure
व्यय expense

संपन्न full of wealth
वराटिका a cowrie
उपार्जित earned
उत्तर reply
पैतृक pertaining to the father
गोष्ठी assembly
बहिर्वेदिका the outside pial
वेणु bamboo
वर्णावलि the sound (... group of lett...)
आक्रन्दध्वनि lamenting voice
अतिकरुणम् very pitiable
रे you fellow!
उत्कृष्य drawing out
जघान killed
पापीयान् a great sinner
मृत्यु death
वितथ vain
समारुरुक्षा desire to ascend
प्रतिमा doll
भूमिकान्तर disguise
निश्चक्राम set out
उत्तितीर्षु desirous of crossing

सत्त्व courage
प्रबभूव was capable
कूल bank
कृच्छ्रचान्द्रायण kinds of expiation
दुष्प्रतिग्रह receiving bad gifts
नियुत million
प्रासाद mansion
अध्वनीन traveller
उत्कण्ठा an ardent desire
परिहस्यते is ridiculed
गोपुर tower
लोहकटाह an iron frying pan
पीयूष nectar
छन्द wish
उपसंहर stop
वदान्य a liberal person
उपदा a present
मकरन्द honey
बृसी seat of a sage
तुलित weighed
पाणिग्रहण marriage
भाण्डागारिक treasurer
कोश treasury

## Translation of the Slokas.



1. I bow to that Goddess of Speech, the exalted of the exalted, the divine-creeper-like bestower of all good on the desirous.

2. In the woods or in the battle, in the midst of the foes, fire or water, on the big ocean or the summits of mountains, the virtues of the previous birth shield a man whether sleepy or out of senses or even if in straits.

3. On one side lie all the sacrifices with their entire good gifts, but on the other side lies (equally worthy) the protecting of a terrified soul.

4. Pleased in a moment and irritated in a moment and bereft of pleasure in a trice, even the favour of such unstable-minded persons is causative of fear.

5. What shrewdness lies there in deceiving them who are good-natured? What Valour behoves him who kills the slumberer on his lap?

6. On seeing the Setu (Rameswaram bridge) and the confluence of the Ganges with the ocean one is purged of the sin of Brahminmurder but never of the sin of treachery towards a friend.

7. A traitor to a friend, an ungrateful person and a violator of faith— These three fall in hell so long as the sun and the moon exist.

8. Oh, King, if you desire weal to your son give gifts unto the twice-born, (for) of all the castes the Brahmin is the lord.

9. Thou livest in the village, never to the woods thou goest; still how dost thou know of the language of the bear and the tiger and man?

10. Sarasvathi resides in my tongue by the blessing of the Gods and the Brahmans. Hence do I understand this as I did the sign of Bhanumati.

11. The company of the good rescues one from difficulties present and future. The water of the Ganges not only alleviates present thirst but wards off even the hell.

12. In this world the vile are as capable of boasting of their own merits as of decrying others'defects. But the noble certainly do no speak of either their own merits or others' draw backs.

13. The big trees give shade unto another but themselves stand in the sun; Yield fruit for others' use, never for their own sake.

14. While wealth lasts, it must be given and be enjoyed, but its storing-up is to be avoided Look at the bees whose stored-up treasure is robbed away by another.

15. In this world, what is there that is not obtainable by money? Hence, here, the shrewd man should amass only wealth.

16. The sonless person has no happy go. never never to heaven. Therefore after looking at the face of the son alone one should choose to do penance.

17. What merit lies there in kindness towards the beneficent ? Noble, he is regarded who is kind towards his foes

18. Crossing of big rivers, the over-powering of a great man, and the enmity of a great multitude— These three are to be shunned at a distance.

19. Clearing oneself of the three debts alone, one should set his mind on Liberation. He that yearns for Liberation, without ridding himself falls low.

20. They are really beasts in human forms and burdens of the Earth, who have neither education, nor penance, nor charity, nor character nor good manners, nor virtue.

21. Protects like a mother, guides in the good (path) like a father, pleases like a consort driving all fatigue, spreads glory in all directions, increases wealth and what else does not knowledge, like the divine creeper, accomplish ?

22. We live by beggary, our costumes are the directions, we lie down on bare Earth, what need have we of these masters ?

23. The king is the relation to relationless, the eye to the eyeless. He is both father and mother and the everconsoling master.

24. All the qualities of milk are given to water mixed with it. Looking at the heating of the milk, the water sacrifices itself in fire. Seeing the difficulty of his freind the milk himself rises to fall in fire, but calms down only with water. Such indeed is friendship with the good.

25. What wonder is there that the good are bent on philanthropy ? The Sandal trees are not born for cooling their own trunks.

26. Let bows be unto you, Poverty. I have become a sage by your favour. Oh Lord of Lords now I see everything, but none sees me.

27. Let the *Summum bonum* of all Dharma (laid down) by the many Sastras be listened to:

Philanthropy makes for virtue and harming others for vice.

28. What is left unprotected (by man) stands protected by Fate, while, even if wellprotected (by man) it perishes, if against Fate. Even if left adrift in the forests it survives, while even if wellcaredfor at home it perishes.

29. Even as bales of cotton are destroyed by a touch of fire, so are all the sins of man by a bath in the (holy) Ganges.

30. May the face of Mother Parvati who, at the time of her marriage (Panigrahana) afraid of the serpent bangle of Lord Siva, shrieked with a look of terror 'Namas Siva' but ceasing in the middle, hung her head in bashfulness (for that was her lord's name) — may that face bring all prosperity to you.

---

Glossary Printed at Sri Komalamba Press, Kumbakonam.